आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७९ ।

नित्यानन्दकृतमिताक्षराव्याख्यासमेता ।



# छान्दोग्योपनिषत् ।



मूल्यं रूपकत्रयम् ( ३ )।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७९

नित्यानन्दकृतमिताक्षराव्याख्यासमेता

# छान्दोग्योपनिषत् ।

वे० शा० रा० वैद्योपाह्वै रंगनाथशास्त्रिभिः संशोधिता ।

सा च

हरि नारायण आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशिता ।

शालिवाहनशकाब्दाः १८३७

खिस्ताब्दाः १९१५



मूल्यं रूपकद्वयम् ( रु० २ )

# आदर्शपुस्तकोल्लेखपत्रिका ।

—:*:*:—

अस्याश्छान्दोग्यमिताक्षराख्यटीकायाः पुस्तकानि यैः परहितैकपरतया दत्तानि तेषां नामानि संज्ञाश्च प्रदर्श्यन्ते—

( क. ) इति संज्ञितम्—टीकापुस्तकम् । वे० शा० सं० के० रामशास्त्रिणां ह्मैसूरनिवासिनाम् ।

( ख. ) इति संज्ञितम्—टीकापुस्तकम् । वे० शा० सं० बडलीकरोपनामकमार्तण्डदीक्षितानाम् ।

ॐ तत्सद्ब्रह्मणे नमः ।

सामवेदीया

# छान्दोग्योपनिषत्

---

## नित्यानन्दकृतमिताक्षराव्याख्यासमेता ।

---

अथ छान्दोग्योपनिषद्व्याख्या मिताक्षरा प्रारभ्यते ॥

योऽनन्तोऽनन्तशक्तिः सृजति जगदिदं पालयत्यन्तरात्मा
संविश्यान्ते निपीय स्वकमहिमगतः सत्यचिन्मूर्तिरास्ते ॥
योऽनुग्रः सज्जनानां परमहिततमः पापिनामुग्रमूर्तिः
सोऽस्माकं वाञ्छिता[1]र्थान्प्रदिशतु भगवानात्म[2]दः श्रीनृसिंहः ॥ १ ॥
यन्मूलप्रवहत्पवित्रपयसः संसेवनादेव मे
रागद्वेषमदाभिधा ग्रहगणा नेशुः स्म संतापिनः ॥
यत्संसारपरिश्रमापहृदयासंशीतलामोदभा-
ग्वन्दे तत्पुरुषोत्तमाश्रमगुरोः पादारविन्दद्वयम् ॥
कृत्वा छान्दोग्यनाम्न्या उपनिषदो विज्ञगोचरां टीकाम् ।
भूयोऽल्पबुद्धिगम्यां नित्यानन्दो मिताक्षरां कुर्वे ॥

देवतोपास्तिसहितकर्मसाध्यकेवलकर्मसाध्ययोरुभयोरपि[4] मार्गयोर्नाऽऽत्यन्तिकी पुरुषार्थसिद्धिः काम्यफलस्य क्षयिष्णुत्वात्सातिशयित्वात्परतन्त्रत्वादङ्गवैकल्यादनेकविघ्नोपहतत्वाच्च । नित्यनैमित्तिकयोरपि गर्भवासादिहेतुत्वादनर्थप्रापकत्वान्निषिद्धस्य चानर्थरूपतायाः प्रसिद्ध[5]त्वात् । ततो विरक्तानां निरवद्यपुरुषार्थजिज्ञासूनामुपनिषदारभ्यत इति काण्डयोर्हेतुहेतुमल्लक्षणः संबन्धः । तत्रोपासनानां चित्तशुद्धिद्वारा ज्ञानकारणत्वात्कारणस्य च कार्यान्नियतपूर्वभावित्वप्रसिद्धेः साकारवस्तुविषयत्वेन मन्दमतीनां तत्र स्थैर्यसंभवाच्च प्रागुपदेशः । तत्र प्राकृते पुरुषे कर्माभ्यासस्यानादिवासनया दृढीकृतत्वात्कर्मपरित्यागेन केवलोपासने चेतःसमर्पणाशक्तेरङ्गावबद्धकर्मसमृद्धिफलकं तावदुपासनमाह—

---

१ ख. °तानि प्र° । २ क. °त्मनः श्री° । ३ क. °भान्मृग्यं त° । ४ क. °पि भाग° ।
५ ख. °सिद्धित्वा° ।

**ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति**
**ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

ओमित्येतदक्षरं[1] वर्णमुद्गीथभक्त्यवयवं परमात्मप्रतीकत्वेनोपासीत तल्लक्षणया । तस्य तद्विशेषणत्वे हेतुमाह—**ओमिति हीति** । हि यस्मादुद्गातोमित्यारभ्योद्गायत्युद्गीथाख्यसामभक्तिं निर्वर्तयत्यत ओंकार उद्गीथः । तस्य गुणादिविवक्षयाऽऽह—**तस्येति** । तस्याक्षरस्योपव्याख्यानमुपकारकाणां रसतमत्वादिगुणादीनां विस्पष्टमाख्यानं कथनं प्रवर्तत इति शेषः ॥ १ ॥

तदेवानुवर्तयन्[2] रसतमत्वादिगुणं[3] भूमिकापूर्वकमाह—

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः ।**
**अपामोषधयो रस ओषधीनां पुरुषो रसः पुरु-**
**षस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः**
**साम्न उद्गीथो रसः ॥ २ ॥**

एषां चराचराणां भूतानां पृथिवी रसः सारः । तस्यास्तत्कारणत्वात् । पृथिव्या आपो रसोऽपां तत्कारणत्वात् । अपामोषधयो व्रीह्यादयो रसः । ओषधीनामप्कार्यत्वात् । गोरसादौ कार्येऽपि रसशब्दप्रयोगदर्शनात् । ओषधीनां पुरुषो देहो रसः । तस्यान्नपरिणामत्वात् । पुरुषस्य वाग्रसः । तदवयवानां[4] वचःसाधिष्ठानत्वात्[5] । वाच ऋग्रसः । तस्य वाङ्निर्वर्त्यत्वात् । ऋचः साम रसः । तस्यर्गध्यूढत्वात् । साम्न उद्गीय उद्गीथावयव ओंकारो रसः । तस्योंकारपूर्वकत्वात् ॥ २ ॥

**स एष रसाना॑ रसतमः परमः परार्ध्योऽष्टमो**
**यदुद्गीथः ॥ ३॥**

अतः स एष भूतानामुत्तरोत्तररसानामातिशयेन रसो रसतमगुणः परम उत्कृष्टो यतः परार्ध्योऽर्धं स्थानं परं च तदर्धं च परार्धं तदर्हतीति परार्ध्यः परमात्मस्थानार्हः । अष्टमः पृथिव्याद्युक्तरससंख्यायां मध्येऽष्टमसंख्यापूरकः । यदुद्गीथः[6] । य ओं वा ॥ ३ ॥

उद्गीथावयव ओंकारे रसतमत्वगुणं विधायाऽऽप्तिगुणं विधातुमुक्तर्ग्जातिशिष्यरूपा श्रुतिः पृच्छति—

**कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम**
**उद्गीथ इति विमृष्टं भवति ॥ ४ ॥**

**कतमेति** । उक्तानामृक्सामजातीनां मध्ये वाच ऋग्रस इत्यत्र कतमा कतमा ऋक्त्वा-[7]

---

१ ख. °क्षरवर्णकमुद्गीथमु° । २ ख. °यन्तीर° । ३ ख. °मत्वगु° । ४ ख. °नां च चेः सा° । ५ ख. °ष्ठानात्° । ६ ख. °यः य उ° । ७ ख. ऋक्काक्र° ।

कारऋग्जातिर्विवक्षिता, कतमत्कतमत्साम सामजातिः कतमः कतम उद्गीथ इतिविमृष्टं विचारितं स्पृष्टं भवति । अत्र वीप्सात्रयं तु तत्तज्जातिज्ञाने श्रद्धातिरेकप्रदर्शनार्थम् ॥ ४ ॥

एवं शिष्यरूपेण चोदिते श्रुतिराचार्यरूपोत्तरमाह—

**वागेवर्क्प्राणः सामोमित्येतदक्षरमुद्गीथः । तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च॥ ५ ॥**

**वागेवेति ।** वागेवर्ग्जातिर्वाच ऋग्योनित्वात् । प्राणः पञ्चवृत्तिकः साम सामजातिः, प्राणबलेन हि गीतिरुत्पद्यते । ओमित्येतदक्षरं प्रकृतमेवोद्गीथस्तस्योद्गीथावयवत्वात् । अथ तद्गुणान्तरं सर्वकामावाप्तिरूपं विदधाति–**तद्वा एतदिति** । तदेतद्वै प्रसिद्धं मिथुनं द्वंद्वं किं तत्, यद्वाक्प्राणश्चेति । एतयोरेव विशेषणम्—**ऋक्च साम चेति ।** ऋक्सामात्मनाऽभिव्यक्तयोरेव वाक्प्राणयोर्मिथुनत्वं प्रदर्शनार्थम् । ततश्चर्क्सामात्मनाऽभिव्यक्तौ वाक्प्राणौ मिथुनं द्वंद्वमेकमेवेत्यर्थः ॥ ५ ॥

**तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥**

तदेतद्वाक्प्राणात्मकं मिथुनमोमित्येतास्मिन्नक्षरे संसृज्यते संबध्यतेऽन्तर्भवत्योंकारस्य वाङ्मयत्वात् । प्राणनिष्पाद्यत्वाच्च । उक्तं मिथुनस्य कामापयितृत्वं दृष्टान्तेनाऽऽह—**यदेति ।** यदा वै यदेव मिथुनौ मिथुनावयवौ स्त्रीपुंसौ ग्राम्यकर्मणि समागच्छत संयुज्येयातां तदा तौ स्त्रीपुंसावन्योन्यस्येतरेतरस्य काममभीष्टमापयतो वै प्रापयत एव यथा, तथोक्तं मिथुनमित्यर्थः । तथाच स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वमोंकारस्य सिद्धमित्यभिप्रायः ॥ ६ ॥

एवमोंकारं प्राप्तिगुणविशिष्टं निरूप्य तदुपासनस्य गुणफलमाह—

**आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥**

**आपयितेति ।** आपयिता प्रापयिता ह वै कामानामभिलषितानां यजमानस्य भवति कः उद्गाता । य एतदक्षरमोंकारमुद्गीथमुद्गीथावयवभूतमेवं व्याप्तिगुणवद्विद्वाञ्ज्ञानन्नुपास्ते स इत्यर्थः ॥ ७ ॥

---

१ ख. कामयितृ° । २ क. ख. य उ° । ३ क. °रमुद्गीथा° ।

समृद्धिगुणं विधातुमाह—

**तद्वा एतदनुज्ञाक्षरं यद्धि किंचानुजानात्योमि-**
**त्येव तदाहैषो एव समृद्धिर्यदनुज्ञा समर्धयिता**
**ह वै कामानां भवति य एतदेवं विद्वानक्षरमु-**
**द्गीथमुपास्ते ॥ ८ ॥**

**तदिति ।** तदेतदोंकारमुक्तलक्षणमनुज्ञाक्षरं वै प्रसिद्धम् । कुतः । याद्धि किंच यत्किंचना- नुजानातीदमन्नादि मया ग्रहीतव्यमित्युक्ते तद्विषयां ह्यनुज्ञां प्रयच्छति तदनुमन्तव्यं प्रत्यो- मित्येषाऽऽह वदत्योमित्येवाऽऽज्ञां प्रयच्छति । अत एवं समृद्धिहेतुत्वादेषा उ एव समृ- द्धिरंभिका यदनुज्ञा याऽनुज्ञा । एतद्गुणोपासनफलमाह—**समर्धयितेति ।** समर्धयिता पूरयिता ह वै कामानां यजमानस्य भवति । कः । य उद्गातैतदक्षरमेवं समृद्धिगुणकं विद्वानुपास्ते ।

यथोक्तं त्रिगुणमक्षरमुपास्यत्वाय स्तौति—

**तेनेयं त्रयी विद्या वर्तत ओमित्याश्रावयत्यो-**
**मिति शंसत्योमित्युद्गायत्येतस्यैवाक्षरस्याप-**
**चित्यै महिम्ना रसेन ॥ ९ ॥**

**तेनेयमिति ।** तेन यथोक्तेनाक्षरेणेयं प्रसिद्धा त्रयी विद्या वेदत्रयीनिर्वर्त्यं कर्म वर्तते प्रवर्तते । त्रयीविद्याशब्देन तद्विहितकर्मलक्षणायां प्रसिद्धिमुदाहरति—**ओमितीति ।** ओमित्याश्रावयत्यध्वर्युः । ओमिति शंसति होता । ओमित्युद्गायत्युद्गाता । स्तुत्यन्तरमाह— **एतस्येति ।** तच्च कर्मैतस्यैवाक्षरस्यापचित्यै पूजार्थमपीश्वरस्याक्षरप्रतीकत्वात्, किं च तच्च कर्मैतस्यैवाक्षरस्य महिम्ना ऋत्विग्यजमानादिलक्षणविकारेण रसेन व्रीह्यादिनिर्वृत्तेन पुरो- डाशादिना त्रयी विद्या वर्तत इति पूर्वेण संबन्धः । उक्तं ज्ञानसहितं कर्म फलातिशयहे- तुरित्यर्थः ॥ ९ ॥

उक्तार्थदार्ढ्याय पूर्वपक्षयति—

**तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद ।**
**नाना तु विद्या चाविद्या च यदेव विद्यया**
**करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं**
**भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं**
**भवति ॥ १० ॥**

**इति प्रथमाध्यायस्य प्रथमः खण्डः ॥ १ ॥**

---

१ ख. तदोंका° । २ क. रपे कामाय° ।

**तेनेति ।** तेनाक्षरेणोभावपि कर्म कुरुतः कौ यश्चैतदक्षरं यथाव्याख्यातं वेद यश्च तथा न वेद न जानातीति । अतस्तयोः कर्मसामर्थ्यादेव फलसिद्धौ न ज्ञानकृतो विदुषः फलातिशय इत्येतत्परिहरति—**नाना त्विति ।** तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यतो विद्या चोपासना ह । अविद्या च कर्म नानाफलं पृथक्फलम् । अतो यदेव कर्म विद्ययोद्गीथाद्यङ्गमात्रविषयया श्रद्धया तात्पर्येणोपनिषदा देवतादिविषयोपासनात्मकया युक्तः सन्करोति तदेव कर्म वीर्यवत्तरमतिशयेन वीर्यवद्भवति एवमुक्तगुणत्रयविशिष्टोद्गीथोपासनमुपसंहरति—**इति खल्विति ।** इत्येवं खल्वासेने प्रयुक्तरसतमत्वादिगुणविशिष्टस्यैवाक्षरस्य व्याख्यानमित्यर्थः ॥ १० ॥

इति प्रथमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ प्रथमाध्यायस्य द्वितीयः खण्डः । )

---

अथास्यैवाक्षरस्याध्यात्मादिभेदेन मुख्यप्राणादिदृष्ट्योपास्यत्वार्थं प्राणशुद्धत्वमाख्यायिकया निर्धारयति—

**देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्या-स्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभवि-ष्याम इति ॥ १ ॥**

**देवासुरा इति ।** प्राजापत्याः प्रजापतेर्यजमानावस्थस्य कर्मिणोऽपत्यवत्स्थिताः प्राजापत्याः । देवाश्चासुराश्च देवासुराः । देवा द्योतनात्मकाः सात्त्विकाः कर्मवृत्तयः । असुरा असुष्वेव रमणाद्राजसास्तामसाश्च कर्मवृत्तयः । त एवोभये ह किल वै यत्र यस्मिन्नन्योन्यविषयापहारलक्षणे निमित्ते संयेतिरे प्रतिदेहमन्योन्यवृत्त्युद्भवाभिभवलक्षणं सङ्ग्रामं कृतवन्तः । तत्र सङ्ग्रामनिमित्ते ह देवा उद्गीथमुद्गीथकर्मोपलक्षितं सोमयागमाजह्रुराहृतवन्तः । अनेन कर्मणैनानसुरानभिभविष्यामः पराभवं करिष्याम इत्येवमभिप्रायवन्तः ॥ १ ॥

**ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे तꣳ हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥**

ते देवा नासिक्यं नासिकायां भवं प्राणं तदभिमानिनं देवमुद्गीथमुपासांचक्रिरे नासिक्यप्राणदृष्ट्योद्गीथावयवमोंकारमुपासितवन्त इति यावत् । तं देवैरित्थमुपास्यमानं[2] प्राणदेवं

---

१ ख. °सनोपयु° । २ क. °नं घ्राणदे° ।

हासुराः स्वाभाविकेन्द्रियवृत्तिरूपाः स्वीयेन पाप्मना सङ्गलक्षणेन विविधुर्विद्धवन्तः संयोजितवन्तः। तस्मात्कारणात्तेन घ्राणेन लोक उभयं सुरभि च दुर्गन्धि चेत्युभयविधं गन्धं गृह्णाति। हि यस्मात्पाप्मनैष घ्राणाख्यः प्राणो विद्धः संयोजितः ॥ २ ॥

**अथ ह वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥**
**अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥ ४ ॥**
**अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥**
**अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳ संकल्पयते संकल्पनीयं चासंकल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥**

अथ ह वाचं चक्षुः श्रोत्रं मन इति पर्यायाः समानार्थाः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

**अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तꣳ हासुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्वꣳसेत ॥ ७ ॥**

अथ प्राणादिषु नैराश्यानन्तरं हैवायं प्रसिद्धो मुख्यो मुखे भवो मुख्यः प्राणः। तमुद्गीथमुपासांचक्रिरे तमुपास्यमानं मुख्यं प्राणं हासुराः पूर्वाभ्यासवशेन ऋत्वा प्राप्य विदध्वंसुः स्वयमेव विनष्टाः। कथं यथा लोकेऽश्मानं पाषाणमाखणं न शक्यते खनितुं विदारयितुमित्यखणः स एवाऽऽखणस्तमृत्वा प्राप्यार्थाच्छ्रुत्यन्तराच्च पांसुपिण्डो विध्वंसेत विशीर्येतैवमेव विदध्वंसुरिति संबन्धः ॥ ७ ॥

उक्तगुणयोः फले आह—

**एवं यथाऽश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥**

**एवं यथेति।** यथाऽश्मानमाखणमृत्वा पांसुपिण्डो विध्वंसत एवं हैव विध्वंसते। स

कः । य एवंविदि यथोक्तप्राणगुणविदि पापं तदनर्हं कर्तुं कामयत इच्छति । यश्चैनं प्राणविदमभिदासति हिनस्ति ताडनादिप्रतिकूलं करोति सः । यस्मात्स एष प्राणविदश्माखण इवाश्माखणोऽप्रधृष्यः ॥ ८ ॥

प्राणादिदेवताः पाप्मविद्धा न तु प्राणदेवतेत्यत्र किं गमकमित्यत आह—

**नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति । एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥**

**नैवैतेनेति ।** हि यस्मान्नैवैतेन मुख्यप्राणेन सुरभि न च दुर्गन्धि वस्तु विजानाति तस्मादेष प्राणोऽपहतपाप्मा । किंच प्राणविषयस्यासाधारणाभावादपि न तस्य पाप्मसंबन्ध इत्याह—**तेनेति ।** तेन कृत्वा लोको यदश्नाति यत्पिबति तेनाशितेन पीतेन चेतरान्प्राणादीन्प्राणानवति पालयति । तदुपभुक्तान्नस्य कार्यकरणसंघातस्थितिहेतुत्वे मानमाह—**एतमु एवेति ।** अन्ततोऽन्तकाल एतमु एतं तं मुख्यं प्राणं तद्वृत्तिहेतुभूतमन्नपानमविदित्वाऽलब्ध्वोत्क्रामति प्राणादिरित्यर्थः । तदा तेषामन्नप्राप्त्यभावादेवोत्क्रान्तिर्न त्वशिशिषाभावादित्यत्र गमकमाह—**व्याददातीति ।** व्याददात्येव मुखविदारणं करोत्येव । अन्ततोऽन्तकाल इत्यतोऽशिशिषाऽस्त्येवेति निश्चीयत इत्यर्थः ॥ ९ ॥

एवं शुद्धत्वगुणदृष्टिविशिष्टोद्गीथोपासनमुक्त्वाऽऽङ्गिरसत्वबृहस्पतित्वायास्यत्वगुणकप्राणदृष्टिविशिष्टोद्गीथोपासनं विदधाति—

**तꣳ हाङ्गिरा उद्गीथमुपासांचक्र एतमु एवाऽऽङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥**

तं हेति । तं ह प्राणमुद्गीथमङ्गिरा नामर्षिरुपासांचक्रेऽतोऽन्य एतमु एव प्राणमुद्गीथमाङ्गिरसमाङ्गिरसगुणविशिष्टं मन्यन्त उपासते । कुतः । अङ्गानां हस्तादीनां यद्यस्मादुद्गीथः प्राण एव सन्रसस्तेनासावाङ्गिरसः ॥ १० ॥

**तेन तꣳ ह बृहस्पतिरुद्गीथमुपासांचक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥ ११ ॥**

**तेन तꣳ हायास्य उद्गीथमुपासांचक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥**

बृहस्पतिर्देवपुरोहितः । शेषं समानम् । तत्र हेतुर्वाग्घि यस्माद्बृहती । तस्या वाच

एष प्राणः पतिः । तेन अयास्यनामा ऋषिः । शेषं समानम् । यस्मादास्यान्मुखादयते निर्गच्छति तेन प्राणोऽयास्यः ॥ ११ ॥१२॥

**तेन तꣳ ह बको दाल्भ्यो विदांचकार । स ह नैमिशीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥**

किंच तं ह प्राणं बको नामतो दल्भस्यापत्यं दाल्भ्यो विदांचकार ज्ञातवान् । स बको ह विदित्वा नैमिशीयानां निमिशक्षेत्रोद्भवानां सत्रं कुर्वतामुद्गाता बभूव स उद्गातैभ्यो नैमिशीयेभ्यः कामानभिलषितानागायति स्म ॥ १३ ॥

**आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥१४॥**

**इति प्रथमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥**

---

अतोऽन्योऽप्यागाता प्रापयिता ह वै कामानां भवति य उद्गातैवं प्राणात्मकं विद्वानेतदक्षरमोंकारमुद्गीथावयवमुपास्ते सोऽपि । इत्येवमुक्तमध्यात्मं दर्शनमित्यर्थः ॥ १४ ॥२॥

इति प्रथमाध्यायस्य द्वितीयः खण्डः ।

---

( अथ प्रथमाध्यायस्य तृतीयः खण्डः । )

---

अध्यात्मप्राणदृष्ट्योद्गीथोपासनकथनानन्तरमाधिदैवतं[1] देवतामाधिकृत्य प्रवर्तनम् । कथं य एवासावादित्यस्तपति तमुद्गीथमुपासीत, आदित्यदृष्ट्योद्गीथमुपासीतेति यावत् । कस्मात् । उद्यन्नुद्गच्छन्नेव सविता प्रजाभ्यः प्रजार्थं प्रजानामन्नोत्पत्त्यर्थमुद्गायत्युद्गाता तावदुद्गायतीति वाऽतस्तथोपासनम् । तद्गुणमाह—

**अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति । उद्यꣳस्तमो भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥**

**उद्यन्निति ।** उद्यन्सविता नैशं तमस्तज्जं च भयं प्राणिनामपहन्ति नाशयति । एतद्गुणोपासनफलमाह—**अपहन्तेति ।** अपहन्ता वै भयस्य जन्ममरणादिलक्षणस्य

---

१ क. तेगानं ।

तमसश्च तत्कारणस्याज्ञानस्य भवति । कः । य एवमुक्तगुणमादित्यं वेदोपास्ते सः॥ १ ॥

अध्यात्माधिदैवतयोरेकोपासनविवक्षया गुणादिसाम्यमाह—

**समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिममुं चोद्गीथमुपासीत ॥ २ ॥**

**समान इति** । उ अपि स्थानतो भिन्नोऽप्ययं प्राणो गुणतो नामतश्च सवित्रा समानस्तुल्य एव। असौ वा आदित्यः प्राणेन समानः। कथम् । उष्णोऽयं प्राण उष्णश्चासौ सविता । तथा स्वरति गच्छतीति स्वर इतीमं प्राणमाचक्षते कथयन्ति स्वर इति । प्रत्यावृत्याऽऽगच्छतीति च प्रत्यावृत्त्या स्वर इत्यमुं सवितारमाचक्षतेऽस्तमित्वा पुनरुदयात्प्राणस्य पुनस्तस्मिन्नेव देहेऽनागमान्न प्रत्यास्वरत्वमपि नामेत्यर्थः । यस्मादेवं गुणनामभ्यां साम्यं तस्मद्वा एतमिमं प्राणममुं चाऽऽदित्यमेकीकृत्योद्गीथमुपासीत ॥ २ ॥

अथ प्राणवृत्तिविशेषदृष्ट्योद्गीथोपासनमाह—

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः । अथ यः प्राणापानयोः संधिः स व्यानो यो व्यानः सा वाक्। तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥ ३ ॥**

**अथ खल्विति**। अथानन्तरं व्यानमेवोद्गीथमुपासीत। व्यानस्वरूपमेवेतरभेदेन दर्शयति—**यदिति**। यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति स प्राणः। प्राणो वायुवृत्तिविशेषः। यदपानित्यपश्वसिति मुखनासिकाभ्यामेव वायुमन्तराकर्षयति स व्यानो वायुवृत्तिविशेषः । अथानन्तरमुक्तलक्षणयोः प्राणापानयोर्यः संधिस्तयोर्वृत्तिविशेषः स व्यानः । तस्य वीर्यवत्कर्महेतुत्वात्तदुपासनमित्याह—**यो व्यान इति**। यो व्यानः सा वाक् । यस्मात्सा व्यानमात्रनिर्वृ(र्व)र्त्या । तस्मादप्राणन्ननपानन्प्राणापानव्यापारमकुर्वन्वाचमभिव्याहरत्युच्चारयति ॥ ३ ॥

तथा वाग्विशेषामृचमृक्स्थं साम सामावयवं चोद्गीथं व्यानमात्रनिर्वर्त्यमित्याह—

**या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम**

---

१ ख. स्तत्स्थो वृ॰ ।

गायति यत्साम स उद्गीथस्तस्माद्प्राणन्ननपा-
नन्नुद्गायति ॥ ४ ॥

या वाक्सा ऋगित्यादि समानार्थम् ॥ ४ ॥

अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽ-
ग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनम-
प्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यान-
मेवोद्गीथमुपासीत ॥ ५ ॥

अतोऽस्माद्वागाद्यभिहरणादन्यान्यपि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि । यथाऽग्नेर्मन्थनमाजेर्मर्यादायाः सरणं धावनं दृढस्य धनुष आयमनमाकर्षणमप्राणन्ननपानंस्तानि करोति । एतस्य हेतोरेतस्मादेवोक्तकारणाद्व्यानमेवोद्गीथमुपासीत नान्यद्वृत्त्यन्तरं फलं चैतद्गुणानुरूपं द्रष्टव्यमित्यर्थः ॥ ५ ॥

उद्गीथोपासनप्रसङ्गेन तत्तदक्षरोपासनमध्यात्माधिभूताधिदैवभेदेनाऽऽह—

अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण
एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर
इत्याचक्षतेऽन्नं थमन्ने हीदꣳ सर्वꣳ स्थितम् ॥ ६ ॥

**अथ खल्विति** । उद्गीथनामाक्षराण्युपासीतेत्युक्ते भक्त्यक्षरोपासनशङ्कां वारयति उद्गीथ इत्येतान्यक्षराणि । तत्र प्राण एवोदक्षरे प्राणदृष्टिः कर्तव्या । कुतः प्राणेन हि यस्मात्सर्वो लोक उत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षते शिष्टाः । अन्नं थमन्ने हि यस्मादिदं सर्वं प्राणिजातं स्थितम् ।

द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवो-
द्वायुर्गीरग्निस्थꣳ सामवेद एवोद्यजुर्वेदो गीरृ-
ग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽ-
न्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथा-
क्षराण्युपास्त उद्गीथ इति ॥ ७ ॥

तथा द्यौरेवोदित्यादि समानम् । एतदुपासनफलमाह—**दुग्ध इति** । अस्मा उपासकाय वाग्दोहं दुग्धे दोग्धि । कोऽसौ दोहो यो वाचो वाचं दोह ऋग्वेदादीनां स्वाधीनोच्चारणत्वलक्षणः । किंचान्नवानन्नभूतान्नोऽन्नमत्तीत्यन्नादश्च दीप्ताग्निर्भवति । कः । य एतानि प्राणादिरूपेणोक्तान्युद्गीथाक्षराण्येवमुत्थानादिधर्मकाणि विद्वानुपास्ते कथमुद्गीथ इत्येवमित्यर्थः ॥ ७ ॥

वाक्समृद्ध्यादिफलकमुपासनमुपादिश्य फलसमृद्धिर्यथा भवति तत्प्रकारं ज्ञानं सर्वकाम्योपासनशेषभूतं प्रासाङ्गिकं विदधाति—

**अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥**

**अथ खल्विति ।** अथोक्तोपासनानन्तरमाशीःसमृद्धिराशिषः काम्यस्य फलस्य समृद्धिर्यथा भवेत्तथा विधीयत इति शेषः। उपसरणान्युपसर्तव्यानि ध्येयानि वस्तूनीत्येवमुपासीत। तान्येव दर्शयति—**येनेति** । येन साम्ना सामविशेषेण स्तोष्यन्स्याद्भवेदुद्गाता तत्सामोपधावेदुपसरेदुत्पत्त्यादिभिश्चिन्तयेत् ।

**यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥ ९ ॥**

यस्यामृचि तत्साम वर्तते तामृचमृग्देवतादिभिरुपधावेदिति प्रत्येकं संबध्यते। यदार्षेयं साम तं चर्षिं यां सामदेवतामभिष्टोष्यन्स्यात्तां च देवताम् ॥ ९ ॥

**येन च्छन्दसा स्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्तꣳ स्तोममुपधावेत् ॥ १० ॥**

येन गायत्र्यादिच्छन्दसा स्तोष्यन्स्यात्तच्छन्दः । येन त्रिवृदादिस्तोमेन स्तोष्यमाणः स्यात्तं च स्तोमम् । अत्राऽऽत्मनेपदप्रयोगात्स्तोमफलस्य कर्तृगामित्वमवगम्यते ॥ १० ॥

**यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥**

यां दिशमभिव्याप्य देवताविशेषं स्तोष्यन्स्यात्तां च दिशमधिष्ठात्रीभिरिन्द्रादिभिरुपधावेत् ॥ ११ ॥

**आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥**

**इति प्रथमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

---

अन्तत एतद्ध्यानावसान उद्गीथात्मानमपि गोत्रादिभिरुपसृत्य संचिन्त्य काममभिलषितमनुसंदधानोऽप्रमत्तः स्वरादिभ्यः प्रमादमकुर्वन्स्तुवीत स्तोष्यमाणां देवतामित्यर्थः । एतत्फलमाह—**अभ्याशो हेति ।** यत्कामो यः कामोऽस्य सोऽयं यत्कामः सन्नुद्गाता यद्यस्मिन्कर्मणि यथोक्तरीत्या स्तुवीत स्तोता भवेत्तत्र कर्मण्यभ्याशो ह क्षिप्रमेवास्मै

एवंविदुद्गात्रे स कामः समृध्येत समृद्धिं गच्छेत् । पुनरुक्तिस्तु प्रासङ्गिकोपासनसमाप्त्यर्था ॥ १२ ॥

इति प्रथमाध्यायस्य तृतीयः खण्डः ।

---

अथ प्रथमाध्यायस्य चतुर्थः खण्डः ।

---

उद्गीथप्रकरणाविच्छेदज्ञापनार्थं प्रासङ्गिकं हित्वा प्रकृतमेवानुसंदधाति—

**ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

ओमित्येतदक्षरमुद्गीथाद्युक्तार्थम् ॥ १ ॥

तस्याक्षरस्योपयुक्तयोरमृताभयगुणयोर्व्याख्यानं कर्तुं प्रस्तावं करोति—

**देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥**

**देवा वा इति** । देवा वै देवासुरा इत्यत्रोक्तान्मृत्योर्मारकात्पाप्मनो बिभ्यतो भीताः सन्तस्त्रयीं विद्यां त्रयीविद्याविहितं कर्म प्राविशन्प्रविष्टवन्तो वैदिकं कर्म प्रारब्धवन्तस्तन्मृत्युत्राणं मन्यमानाः । किंच ते देवाः कर्मण्यविनियुक्तैश्छन्दोभिर्मन्त्रैर्जपादि कुर्वन्त आत्मानं कर्मान्तरेऽछादयंश्छादितवन्तः । यद्यस्मादेभिश्छन्दोभिर्देवा आत्मानमच्छादयंस्तत्तस्माच्छन्दसां छन्दस्त्वम् ॥ २ ॥

एवं कर्म कुर्वतामपमृत्युवशता न व्यावृत्तेत्याह—

**तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि । ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥**

**तानु तत्रेति** । यथा लोके मत्स्यमुदके परिपश्यन्मत्स्यघातको बडिशाद्युपायसाध्यं मन्यमान एवमेव मृत्युस्तान्कर्मपरानु अपि देवांस्तदृचि साम्नि यजुषि तत्संबद्धे कर्मणि पर्यपश्यत्कर्मक्षयोपायसाध्यान्मन्यमानः । मृत्युपरिहारोपायमुपदिशति—**ते नु विदित्वेति** । नु वितर्के । ते देवाः कर्मणा शुद्धात्मानः सन्तो मृत्योश्चिकीर्षितं विदित्वा विदित्वा, ऋचः साम्नो यजुष उक्थ्यो( क्ता )र्थादूर्ध्वा व्यावृत्ताः सन्तः स्वरमेवोंकारमेव प्राविशन्प्रविष्टास्तदुपासनपराः संवृत्ताः ॥ ३ ॥

ओंकारे कथं स्वरशब्दप्रवृत्तिरित्यत आह—

**यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवꣳ सा-**
**मैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं**
**तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥**

यदा यस्मिन्काले वै ऋचमाप्नोत्यध्ययनेन तदोमित्येवातिशयेन स्वरत्यादरधियोच्चारयति एवं यदा सामाऽऽप्नोति तदोमित्येवातिस्वरति एवं यजुष्प्राप्तिरप्योंकारपूर्विकैव । अत एष उ अपि स्वरः । कः । यदक्षरमोंकाराख्यमेतच्चामृतमभयं तथाविधब्रह्मप्रतीकत्वात् । तदुपासकानां गुणानुरूपं फलमाह—**तदिति** । तदुक्तोभयमोंकारं प्रविश्य ब्रह्मबुद्ध्या ध्यात्वा देवा अमृता अभयाश्चाभवन् ॥ ४ ॥

तथाऽप्यन्येषां किमित्यत आह—

**स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरꣳ**
**स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता**
**देवास्तदमृतो भवति ॥ ५ ॥**

**इति प्रथमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥**

---

**स य इति** । स यः कश्चिदन्योऽपि देववदेतदक्षरमेतदुक्तगुणं विद्वान्प्रणौति प्रकर्षेण स्तौत्युपास्ते सोऽप्यक्षरममृतमभयं ब्रह्म प्रविशति । राजगृहं प्रविष्टानामिवाक्षरं प्रविष्टानामपि फले विशेषः स्यादित्यत आह—**तत्प्रविश्येति** । तदुक्ताक्षरप्रतीकं ब्रह्म प्रविश्य यदमृतं येनामृतत्वेन विशिष्टा देवास्तदमृतस्तेनैवामृतत्वेन विशिष्टो भवत्यन्योऽपीत्यर्थः ॥५॥

इति प्रथमाध्यायस्य चतुर्थः खण्डः ।

---

अथ प्रथमाध्यायस्य पञ्चमः खण्डः ।

---

प्रणवोद्गीथयोरेकत्वोक्तिपूर्वकमादित्यदृष्ट्योद्गीथोपासनं गुणान्तरविधानायानुवदति—

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः**
**स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष**
**प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥**

**अथेति** । अथोभयगुणकोपास्तिकथनानन्तरं खलु प्रसिद्धं य उद्गीथः स प्रणवो

---

१ ख॰ °रथोंका° ।

बह्वृचां( चानां ) यः प्रणवः स उद्गीथश्छन्दोगानामिति । असौ वा आदित्य उद्गीथः । एष प्रणवः प्रणवशब्दवाच्योऽपि । कस्मात् । हि यस्मादेष सवितोमिति स्वरन्नुच्चारयन्नेति गच्छति । यद्वा प्राणिनां प्रवृत्त्यर्थमोमिति स्वरन्ननुज्ञां कुर्वन्निवेत्यत ओंकारत्वं सवितुः ॥ १ ॥

अनूदितं निन्दित्वा रश्मिभेददृष्टिं सफलां विदधाति—

**एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥**

**एतमिति ।** एतमु एवाऽऽदित्यं रश्मिभेदमकृत्वैवाहमभ्यगासिषमाभिमुख्येन गीतवान्ध्यानं कृतवान्यस्मात्तस्मान्मम त्वमेकः पुत्रोऽसीति ह कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाच । अतस्त्वं रश्मीनादित्यं च भेदेन पर्यावर्तयादिति प्रथमपुरुषः पर्यावर्तयेति मध्यमपुरुषत्वेन व्याख्येयः । एवं बहवो वै ते तव पुत्रा भविष्यन्तीत्येवमुक्तमधिदैवतं दर्शनमित्यर्थः ॥ २ ॥

तथैवोक्तप्राणोपासनमनूद्य निन्दित्वा मुख्यामुख्यप्राणयोर्भेदेनोपासनं सफलमाह—

**अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥**

**अथाध्यात्ममिति ।** अथानन्तरमध्यात्ममुच्यते । य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत । कुतः । हि यस्मादेष प्राणोऽप्योमिति स्वरन्वागादिप्रवृत्त्यर्थमनुज्ञां कुर्वन्निवैति । शेषं समानम् ॥ ३ ॥

**एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥**

अथ प्राणादीन्मुख्यं च प्राणं भेदगुणविशिष्टमुद्गीथं भूमानं बहुत्वोपेतं कृत्वा त्वं मनसाऽभिगायतादावर्तये [ त्यर्थः । ] बहवो वै मे मम पुत्रा भविष्यन्तीत्यभिप्रायः सन्नित्यर्थः ॥ ४ ॥

---

१ क. अतः प्रा॰ ।

एवं प्रधानविज्ञानफलमुक्त्वोक्तस्याङ्गभूतस्य प्रणवोद्गीथयोरेकत्वज्ञानस्यानुवादपूर्वकं फलमाह—

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥**

**इति प्रथमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

**अथ खल्विति ।** अनुवाद उक्तार्थः । एतदेकत्वविज्ञानसामर्थ्यादुद्गाता होतृषदना- [ *होता यत्स्थः शंसति तद्धोतृषदनं तन्मात्रादेव लक्षत[ ण ]संधानासंभवाल्लक्षणया हौत्रात्कर्मणः सम्यक्प्रयुक्तात्प्रणवात् । तद्धेतुं कृत्वा दुरु ] द्गीथमपि दुष्टमुद्गीथमुद्गानं स्वकर्मणि प्रामादिकं क्षतं प्राप्तमप्यनुसमाहरत्येवानुसंदधात्येव । अभ्यास आदरार्थः ॥ १ ॥

इति प्रथमाध्यायस्य पञ्चमः खण्डः ।

---

अथ प्रथमाध्यायस्य षष्ठः खण्डः ।

---

पुत्राद्यैश्वर्यैकदेशविषयमुपासनमुक्त्वा ज्योतिष्टोमाद्यधिष्ठितस्य[2] समग्रैश्वर्यप्राप्त्यर्थमधिदैवतमध्यात्मं चोद्गीथोपासनं प्रधानं विधातुं तावदाधिदैवतमङ्गोपासनं विदधाति—इयमेवेत्यारभ्य य एषोऽन्तरादित्य इत्यतः प्राक्तनेन ग्रन्थेन ।

**इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयत इयमेव साऽग्निरमस्तत्साम ॥ १ ॥**

इयमेव पृथिवीसंज्ञा[3] ऋक् । ऋचि पृथिवीदृष्टिः कर्तव्या, अग्निः साम । साम्न्यग्निदृष्टिः कर्तव्या, कुतः । तदेतदग्न्याख्यसामैतस्यां पृथिव्यामृच्यध्यूढमधिगतमुपरिभावेनाऽऽस्थितं यस्मात्तस्मादिदानीमपि ऋच्यध्यूढमृच्याश्रितं साम गीयते । तथेयमेव पृथिवी सामार्धसाशब्दवाच्या स्त्रीत्वादग्निरम इतरार्धो मशब्दवाच्यः पुंस्त्वात् । तदेतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वात् ॥ १ ॥

**अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥ २ ॥**

---

* धनुश्चिह्नान्तर्ग्रन्थः ख. पुस्तकस्थः ।

---

१ क. अतः प्रा° । २ ख. °धिकृत° । ३ ख. °वीऋ° । ४ क. °ज्ञापृ° ।

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव साऽऽदित्योऽमस्तत्साम ॥ ३ ॥
नक्षत्राण्येवर्क्चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥

एवमेवान्येऽपि पर्याया बोद्धव्याः ॥ २ ॥ ३ ॥ ४ ॥

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते ॥ ५ ॥

शुक्लं भाः शुक्लदीप्तिः । परः कृष्णमतिशयेन कार्ष्ण्यं योगिभिर्दृश्यते न सर्वैः । शेषं सुबोधम् ॥ ५ ॥

अथाधिदैवप्रधानोपास्यस्वरूपमाह—

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः॥६॥

**अथेति ।** य एष आदित्यमण्डले हिरण्मय इव हिरण्मयो ज्योतिर्मयो न तु स्वर्णविकारोऽसंभवात् । पुरुषः पुरि शयनात्स्वात्मना जगत्पूरणाद्वा दृश्यते समाहितचेतोभिः । तथा हिरण्मयानि श्मश्रूणि यस्येति हिरण्यश्मश्रुः । हिरण्मयाः केशा अस्येति हिरण्यकेशो ज्योतिर्मयश्मश्रुकेश इति यावत् । किंबहुनाऽऽप्रणखात् । प्रणखो नखाग्रं तेनाऽऽ सह सर्व एव स्वर्ण इव भास्वरः ॥ ६ ॥

सर्वविशेषणादक्ष्णोऽपि तत्प्रसङ्गं प्रत्याह—

तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥

**तस्येति ।** यथा कप्यासं पुण्डरीकं कपिर्येनाऽऽस्त उपविशति तत्कप्यासं कपिपृष्ठान्तस्तद्वदत्यन्ततेजस्वि पुण्डरीकमेवं तथैव तस्योपास्यदेवस्याक्षिणी उपमितोपमत्वान्न

---

१ क. °पमितत्वा° ।

हीनोपमा । उपास्यस्य क्षेत्रज्ञत्वशङ्कां वारयितुं गौणं नामोपदिशति—**तस्येति** । तस्यैवं-गुणविशिष्टोपास्यादित्यस्योदिति गौणं नाम । कुतः स एष देवः सर्वेभ्यः पाप्मभ्य उदितः । ह उत् इतो गत उद्गतः । अथोपासनफलमाह—**उदेति हेति** । उदेति ह वै उद्गच्छत्येव सर्वेभ्यः पाप्मभ्यो य एवं यथोक्तमुन्नामानं परमात्मानं वेदोपास्ते । परमात्मनोऽप्युद्गीथे संपाद्योपासनं कर्तव्यमिति ॥ ७ ॥

तस्य सर्वात्मत्वं वदन्नाह—

**तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥**

**इति प्रथमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

**तस्येति** । तस्योन्नाम्न ऋक्च साम च द्यावापृथिव्याद्युक्तलक्षणे गेष्णौ पर्वणी यस्मात्तस्मात्परमात्मोद्गीथ इति परोक्षेणोच्यते । ' परोक्षप्रिया इव हि देवाः ' [ ऐत० ३ । १४ ] इति श्रुतेः । देवस्योन्नामत्व उद्गातृत्वप्रसिद्धिं प्रमाणयति—**तस्मादिति** । यस्मादेतस्योन्नाम्नो हि गाता तस्मात्त्वेवं तस्मादेवोद्गायतीत्युद्गातेत्युद्गातृनामप्रसिद्धिः । आदित्यान्तर्गतस्य देवस्य परमात्मत्वे हेत्वन्तरमाह—**स एष इति** । स एष उन्नामा देवः । ये चैतस्मात्परागञ्चनात्पराञ्चनात्पराच ऊर्ध्वा लोकास्तेषां लोकानां चेष्ट ईशिता देवकामानां च तदधिष्ठातारो ये देवास्तेषां कामानां काम्यमानफलानां चेष्ट इत्यधिदैवतं देवताविषयं देवस्योदक्षरस्वरूपमित्यर्थः ॥ ८ ॥

इति प्रथमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

अथ प्रथमाध्यायस्य सप्तमः खण्डः ।

---

अथाध्यात्मोपासनेऽङ्गानुचिन्तनमाह—

**अथाध्यात्मं वागेवर्क्प्राणः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते । वागेव सा प्राणोऽमस्तत्साम ॥ १ ॥**

**चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते । चक्षुरेव साऽऽत्माऽमस्तत्साम ॥ २ ॥**

श्रोत्रमेवर्क्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ
साम तस्मादृच्यध्यूढꣳ साम गीयते । श्रोत्रमेव
सा मनोऽमस्तत्साम ॥ ३ ॥

अथाध्यात्ममिति । वागेवर्क्प्राणः[1] सामेत्याद्याधिदैविकपर्यायवज्ज्ञेयम् । चक्षुरेवर्गा-त्मेत्यत्राऽऽत्मशब्देन चक्षुस्था छायैवोच्यते ॥ १ ॥ २ ॥ ३ ॥

अथाध्यात्मप्रधानमनुचिन्तनीयमाह—

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं
परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ
साम तस्मादृच्यध्यूढꣳ साम गीयते । अथ
यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं
परः कृष्णं तदमस्तत्साम ॥ ४ ॥

अथ[2] यदेतदक्ष्णः शुक्लं भा इति । समानार्थः ॥ ४ ॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्त-
त्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव
रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ
यन्नाम तन्नाम ॥ ५ ॥

य एषोऽक्षिण पुरुषः परमाख्यो दृश्यते सेत्यादितच्छब्दैश्चाक्षुषोक्तिलिङ्गव्यत्ययस्तु विधेयलिङ्गापेक्षया । सैव[3] पुरुष ऋगुक्थादन्यच्छस्त्रजातं[4] तत्साम स्तोत्रं तदुक्थं शस्त्रविशेष-स्तद्यजु[र्यत्तु] स्वाहादिमन्त्रजातं तद्ब्रह्म वेदो ब्राह्मणभागः । स्थानभेदेनाक्षिपुरुषस्याऽऽदि-त्यपुरुषाद्भेदशङ्कां वारयति—तस्यैतस्येति । तस्यैतस्य चाक्षुषरूपस्य तदेव रूपं यद-मुष्याऽऽदित्यपुरुषस्य रूपं हिरण्मय इत्याद्युक्तं यावमुष्याऽऽदित्यस्य गेष्णौ पर्वणी तावेवास्य चाक्षुषस्य गेष्णौ यदमुष्य नामोदित्युद्गीथ इति च तदेवास्य नाम ॥ ५ ॥

किंचाऽऽधिदैविकस्यैवाऽऽध्यात्मिकस्यापि निरङ्कुशैश्वर्यश्रवणात्तयोरैक्यमित्याह—

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे
मनुष्यकामानां(णां) चेति तद्य इमे वीणायां
गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः॥६॥

स एष इति । स एष चाक्षुषः पुरुषो ये चैतस्मादाध्यात्मिकचाक्षुषपुरुषात्क्षेत्रज्ञा-दर्वाञ्चोऽर्वाग्गता लोका मानुषाद्यास्तेषां चेष्टे ईशिता मनुष्यकामानां(णां) चेष्टे । पुनस्तयोर्भेदा-

---

१ ख. प्राणो घ्राण सा° । २ क. अथैत° । ३ क. °वपुरुषान्यपु° । ४ क. °तं वक्ष्यामः स्तो° । ५ ख. °षस्तद्यत्तुस्वा° ।

भावे हेत्वन्तरमाह—**तद्य इति** । तच्छब्दो यस्मादर्थे । य इमे गायका वीणाया राजादीन् गायन्ति ते यस्मादेतमेव सर्वोपाधिप्रविष्टमीश्वरमेव गायन्ति तस्मात्ते गायका धनसनयो धनलाभयुक्ताः ॥ ६ ॥

अथैतयोरेकत्वे सिद्ध उपासनमप्येकमेवेति दर्शयति—

**अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ताꣳश्चाऽऽप्नोति देवकामाꣳश्च ॥ ७ ॥**

**अथेति** । य एवं यथोक्तं चक्षुरादित्[1]स्थानस्थं देवं विद्वानुद्गीथे संपाद्य साम गायति स उभौ चाक्षुषादित्यौ(*कीकृत्य गायति गायेदुपासीत । उपासनामेव द्रढयन्ती तत्फलमाह—**सोऽमुनेति** । स आदित्यमेवोपासकः स एवैषोऽक्षिपुरुषोपास )कोऽमुनाऽऽदित्येनाऽऽदित्यान्तर्गतदेवो भूत्वा ये चामुष्मादादित्यात्पराञ्च ऊर्ध्वलोकास्तांश्चाऽऽप्नोति देवकामांश्चाऽऽप्नोति ॥ ७ ॥

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाऽऽप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥**

**कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ९ ॥**

**इति प्रथमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥**

---

अथो अप्यनेनैवाक्षिपुरुषेणैवाक्ष्यन्तर्गतदेवो भूत्वा ये चैतस्मादक्षिपुरुषादर्वाञ्चो लोका मनुष्याद्यास्तांश्चाऽऽप्नोति मनुष्यकामांश्चाऽऽप्नोति । अस्य फलस्य यजमानगामित्वं दर्शयति—**तस्मादिति** । तस्मादु ह किलोद्गाता यजमानं प्रति ब्रूयाद्वदेत्कं ते तव काममिष्टमागायानीति । कुत एष ह्येवोद्गाता हि यस्मात्कामागानस्येष्टे कामं संपादयितुमीष्टे समर्थः । को य उद्गाता यथोक्तेन प्रकारेण विद्वान्साम गायति । अभ्यास उद्गीथोपासनसमाप्त्यर्थः ॥ ८ ॥ ९ ॥

इति प्रथमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

* धनुश्चिह्नान्तर्गतग्रन्थः ख. पुस्तकस्थः ।

---

१ क. °दिद्विस्था° ।

( अथ प्रथमाध्यायस्याष्टमः खण्डः । )

---

उक्तस्थानभेदावच्छेदं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्योद्गीथोपासनं वक्तुं सुखबोधार्थमाख्यायिकामारचयति—

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥**

**त्रयो होद्गीथ इति ।** त्रयस्त्रिसंख्याका उद्गीथ उद्गीथगानं प्रति कुशला निपुणा बभूवुः । के ते शिलको नामतः शलावतोऽपत्यं शालावत्यः । चिकितानस्यापत्यं चैकितायनः । दल्भगोत्रापत्यं दाल्भ्यः प्रवाहणो नामतो जीवलस्यापत्यं जैवलिस्ते त्रयो हान्योन्यमूचुः । किंचोद्गीथे वै कुशला वयं स्मो भवामः । अतो हन्त यद्यनुमतिर्भवतां भवेत् । तर्ह्युद्गीथे कथां वादात्मिकां कुर्मः ॥ १ ॥

**तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥ २ ॥**

इति परस्परमुक्ते सति तथेत्यङ्गीकारं कृत्वा ह ते ह समुपविविशुरुपविष्टाः । स ह प्रवाहणो जैवली राजोवाच । किं भगवन्तौ पूजावन्तावग्रे पूर्वं वदतां युवयोर्ब्राह्मणयोर्वदतोरहं वाचं वाङ्मात्रं श्रोष्यामीति ॥ २ ॥

**स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥**

एवमुक्ते ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यं प्रत्युवाच । किं हे दाल्भ्य त्वं हन्त यद्यनुमंस्यसे तर्हि त्वा त्वामहं पृच्छामी(नी)त्युक्ते दाल्भ्यः पृच्छेति होवाच ॥ ३ ॥

**का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥ ४ ॥**

इत्युक्त इतरः का साम्नोद्गीथाख्योंकारस्य गतिराश्रयः कारणं किमिति शालावत्येन पृष्टो दाल्भ्यः स्वरो ध्वनिविशेष ओंकारकारणं होवाच । स्वरस्य का गतिरिति

पृष्टे प्राणो बलं कारणमिति होवाच प्राणस्य का गतिरित्युक्तेऽन्नं कारणमिति होवाच । अन्नस्य का गतिरित्युक्त आपः कारणमिति होवाच ॥ ४ ॥

**अपां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति ॥ ५ ॥**

अपां का गतिरित्युक्तेऽसौ स्वर्गलोकः कारणम् , अमुष्य स्वर्लोकस्य का गतिरित्युक्तः पृष्टो दाल्भ्यो न स्वर्लोकमतीत्याऽऽश्रयान्तरं प्रति साम कश्चिन्नयेत्प्रापयेदिति होवाच । अतो वयमपि स्वर्लोकं प्रति सामाभिसंस्थापयामः स्वर्गलोकप्रतिष्ठितं साम जानीमः । भ्रान्तत्वशङ्कां वारयितुं हेत्वन्तरमाह—**स्वर्गेति** । स्वर्गसंस्तावं[1] स्वर्गो वै लोकः सामवेद इति स्वर्गत्वेन संस्थापनं[2] संस्तावो यस्य तत्स्वर्गसंस्तावं हि यस्मात्साम ॥ ५ ॥

**तꣳ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥**

अतः स्वर्गं प्रतिष्ठितमित्युक्तवन्तं चैकितायनं दाल्भ्यं प्रति शिलकः शालावत्य उवाच । किमप्रतिष्ठितमसंस्थितं वै किल ते तव हे दाल्भ्य साम । स्वर्गप्रतिष्ठितं सामेति विज्ञाने दोषमाह—**यस्त्विति** । विपरीतविज्ञानं प्रति यस्तु कश्चिन्मिथ्यावचनमसहमान[3] एतर्ह्येतस्मिन्मिथ्यावचनकाले ब्रूयात्किं ते तव विपरीतवादिनो मूर्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीति एवमपराधस्य[4] ते तव मूर्धा शिरो विपतेदिति ॥ ६ ॥

एवमुक्तो दाल्भ्य आह—

**हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकꣳ सामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति ॥ ७ ॥**

**हन्तेति** । हन्ताहमेतत्पृष्टं सामाश्रयं भगवतः सकाशादहं वेदानीत्येवमुक्तः शाला-

---

१ ख. संस्रावं । २ ख. संस्रवनं । ३ क. कस्मिन्मि° ४ क. एवंप्रक्षलनापरस्य ।

वत्यो हे दाल्भ्य विद्धीति होवाच । इत्युक्तो दाल्भ्यः पृच्छति—**अमुष्येति ।** अमुष्य स्वर्लोकस्य का गतिः किं कारणमिति पृष्टः शालावत्योऽयं पृथिवीलोकः कारणमिति होवाच । अस्य यागादिना स्वर्गलोकपोषकत्वात् । अस्य लोकस्य का गतिरिति पृष्टे न प्रतिष्ठां लोकं पृथिवीलोकमतिनयेत्साम कश्चिदिति होवाच । अतो वयमपि प्रतिष्ठां प्रतिष्ठाहेतुभूतं पृथिवीलोकं प्रति सामाभिसंस्थापयामः प्रतिष्ठासंस्तावम् ' इयमेव रथंतरम् ' इतिश्रुत्या पृथिवीत्वेन संस्तुतं हि यस्मात्सामातः पृथिवीप्रतिष्ठमिति ॥ ७ ॥

**तꣳ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ॥ ८ ॥**

**इति प्रथमाध्यायस्याष्टमः खण्डः ॥ ८ ॥**

---

एवमुक्तवन्तं प्रति प्रवाहण इत्यादि पूर्ववत् ॥ ८ ॥

इति प्रथमाध्यायस्याष्टमः खण्डः ।

---

( अथ प्रथमाध्यायस्य नवमः खण्डः । )

---

**अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥**

अस्य पृथिवीलोकस्य का गतिरिति पृष्टः प्रवाहण आकाशो विभुत्वादिगुणसाम्यात्परमात्मैवेति होवाच । कुतः सर्वाणि ह वा इमानि स्थावरजङ्गमानि भूतान्याकाशादेवोत्पद्यन्त आकाशं प्रत्यस्तं यन्ति नाशं यान्ति गच्छन्ति । किंचाऽऽकाश एव हि यस्मादेभ्यो यथोक्तसर्वभूतेभ्यो ज्यायान्महत्तरोऽतः सर्वेषां भूतानां परमयनं परायणं प्रतिष्ठा त्रिषु कालेषु । एतच्च सर्वं परमात्मपरिग्रह एव घटत इत्यर्थः ॥ १ ॥

**स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयाꣳसमुद्गीथमुपास्ते ॥ २ ॥**

ततश्च स एष आकाशः परमात्मा परोवरीयान्परं परमुत्तरोत्तरं वरीयसोऽपि स्वरप्राणान्नादेः सकाशादतिशयेन परोवरीयानुत्तरोत्तरश्रेष्ठादपि श्रेष्ठः स उद्गीथः संपन्नः । किंच स एष उद्गीथे संपादितः परमात्माऽऽकाशोऽनन्तास्त्रिविधपरिच्छेदशून्यः । एवमुपास्यस्वरूपमुक्त्वा तदुपासनविधेः फलमुपदिशति—**परोवरीय इति** । परोवरीयः परेभ्यो राजादिभ्योऽतिशयेन वरीयस्त्वं श्रैष्ठ्यं हास्योपासकस्य भवतीतीदं दृष्टं फलमदृष्टं तु विद्वान्परोवरीयसो होत्तरोत्तरान्ब्रह्माकाशान्ताँल्लोकाञ्जयति प्राप्नोति । कः, य एवमुक्तरीत्योद्गीथदर्शनं विद्वान्परोवरीयांसमुद्गीथमुपास्ते ॥ २ ॥

अतिशयमर्थवादमाह—

> तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥ ३ ॥

**तं हैतमिति** । तमेतमुद्गीथदर्शनं हातिधन्वा नामतः शुनकस्यापत्यं शौनक उदरशाण्डिल्यायोक्त्वोवाच । किं, यावत्कालं ते तव प्रजायां संततावेनमुद्गीथं त्वत्संततिजा वेदिष्यन्ते ज्ञास्यन्ति तावत्पर्यन्तमस्मिँल्लोक एभ्यः प्रसिद्धेभ्यः लौकिकजीवनेभ्यः परोवरीय उत्तरोत्तरविशिष्टतरं जीवनं ह भविष्यति ॥ ३ ॥

> तथाऽमुष्मिँल्लोके लोक इति स य एतदेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

इति प्रथमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

तथा विशिष्टतरजीवनवदमुष्मिन्नदृष्टेऽपि लोके परोवरीयाँल्लोको भविष्यतीति । भवेत्तत्फलं पूर्वेषां महाभाग्यानां नचैदंयुगीनानामित्यत आह—**स य इति** । स यः कश्चिदेतमुद्गीथमिदानीमप्येवं विद्वानुद्गीथमुपास्तेऽस्यापि ह परोवरीय एवैनमस्मिँल्लोके भवति । अथामुष्मिँल्लोके परे लोके परोवरीयो लोकः । अभ्यास उद्गीथोपास्तिसमाप्त्यर्थः ॥ ४ ॥

इति प्रथमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथ प्रथमाध्यायस्य दशमः खण्डः । )

———

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमुपासनं वक्तुं तावदाख्यायिकामारचयति—

**मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥**

**मटचीहतेष्विति ।** मटच्यो मर्दनहेतवः पाषाणवृष्ट्यादयस्ताभिः कुरुषु देशेषु हतेष्वन्नालाभादाटिक्योऽटनाय प्रवृत्तः । आटिक्येति पाठान्तरे तु गृहान्तराद्यटनार्हत्वादाटिकी तयाऽऽटिक्या जायया सह कुत्सितावस्थां प्राप्तश्चक्रस्यापत्यं चाक्रायण उपस्तिर्नामतो ह इभ्यग्राम इभो हस्ती तमर्हतीतीभ्यो राजा हस्तिपको वा तस्य ग्राम इभ्यग्रामस्तस्मिन्नुवासोषितवान् ॥ १ ॥

**स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे तꣳ होवाच । नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥ २ ॥**

स उषस्तिर्ह्यन्नार्थमटन्निभ्यं हस्त्यारोहं कुल्माषान्कुत्सितान्माषान्खादन्तं भक्षयन्तं बिभिक्षे याचितवान् । तमुषस्तिं हेभ्य उवाच । किं यच्च ये चेमे मम भाजने भोजनपात्र उपनिहिता निक्षिप्ताः कुल्माषा इतोऽस्माद्भाजनस्थादुच्छिष्टकुल्माषादन्ये न विद्यन्ते [इति] ॥२॥

**एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच ॥ ३ ॥**

इत्युक्त उषस्तिः । ए[ ते ]षामिति कर्मणि षष्ठी । एतांस्त्वया भक्ष्यमाणान्कुल्माषान्मे मह्यं देहीत्युवाच । इत्युक्त इभ्यस्तान्कुल्माषानस्मा उषस्तये प्रददौ प्रदत्तवान् । हन्तोच्छिष्टाः कुल्माषा भक्षिताश्चेदिदमनुपानमुदकं गृहाणेत्युक्त उषस्तिर्यदुदकमहं पास्यामि तदा त्वदीयमुच्छिष्टं वै मे मया पीतं स्यादिति होवाच ॥ ३ ॥

**न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदकपानमिति ॥ ४ ॥**

एवमुक्त इभ्य एते कुल्माषा अपि किं नोच्छिष्टाः स्विद्वितर्के । इति होवाच । एवमुक्तोऽप्युषस्तिरिमान्कुल्माषानखादन्नभक्षयन्न वै नैवाजीविष्यं जीविष्यामीत्युवाच । पानाभावेऽपि तुल्यं जीवनराहित्यमित्यत आह—**कामेति ।** मे ममोदकपानं तु काम इच्छातो लभ्यते यथेष्टमतस्तत्पाने नरकपातः स्यात् ॥ ४ ॥

**स ह खादित्वाऽतिशेषाञ्जायाया आजहार साऽग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥**

स उषस्तिस्तांश्च खादित्वाऽतिशेषानतिशिष्टान्कुल्माषाञ्जायाया आजहाराऽऽहृतवान् । सा च जायाऽग्रे कुल्माषप्राप्तेः पूर्वमेव सुभिक्षा शोभनभिक्षा लब्धान्ना बभूव तथाऽपि स्त्रीस्वाभाव्यात्तान्कुल्माषान्पत्युर्हस्तात्प्रतिगृह्य निदधौ निक्षिप्तवती ॥ ५ ॥

**स ह प्रातः संजिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्राᳬ राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥**

स भर्ता ह प्रातःकाले संजिहानः शय्यां निद्रां वा परित्यजन्बतेति खिद्यमान उवाच । किं यद्यन्नस्य स्तोकं लभेमहि तर्हि तद्भुक्त्वा वयं धनमात्रां धनशेषं लेशं लभेमहि । राजाऽसौ निकटे यक्ष्यते यागं कुरुते । ततः किं स च राजा मा मां सर्वैरार्त्विज्यैर्ऋत्विक्कर्मभिर्ऋत्विक्कर्मप्रयोजनाय वृणीतेति ॥ ६ ॥

**तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥**

तमेवमुक्तवन्तं पतिं प्रति जायोवाच, किं हन्त तर्हि हे पत इमे त्वद्दत्ता एव कुल्माषास्तान्पत्नीदत्तान्पर्युषितान्कुल्माषान्खादित्वाऽमुं राजयज्ञमृत्विग्भिर्विततं विस्तारितमेयायागात् ॥ ७ ॥

**तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच ॥ ८ ॥**

तत्र गत्वोद्गातॄनास्ताव आगत्य स्तुवन्त्यस्मिन्नित्यास्तावो देशविशेषस्तस्मिन्नास्तावे स्तोष्यमाणानामुप समीप उपविवेशोपविष्टः । स उषस्तिर्ह प्रस्तोतारमुवाच ॥ ८ ॥

**प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥**

किं हे प्रस्तोतर्या देवता प्रस्तावं प्रस्तावभक्तिमन्वायत्ताऽनुगता तां देवतां चेदविद्वान्प्रस्तोष्यसि प्रस्तावं करिष्यसि तर्हि ते तवाविदुषो मूर्धा शिरो विपतिष्यति विस्पष्टं पतिष्यतीति ॥ ९ ॥

**एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥ १० ॥**

एवमेवोद्गातारमुवाचेत्यादि समानम् ॥ १० ॥

एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासांचक्रिरे ॥ ११ ॥

इति प्रथमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

तेषु विनीतत्वं दर्शयति—ते हेति । ते प्रस्तोत्रादयः समारताः कर्मभ्य उपरताः सन्तो मूर्धपातभयात्तूष्णीमासांचक्रिरे ॥ ११ ॥

इति प्रथमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथ प्रथमाध्यायस्यैकादशः खण्डः । )

---

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

अथ तेषां तूष्णींभावानन्तरं हैनमुषस्तिं प्रति यजमानो राजोवाच । किं भगवन्तं पूजावन्तं वाअहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्वाऽन्यानवृषि ॥ २ ॥

इत्युक्तः स यजमान उवाच । किं भगवन्तं वै श्रुत्वाऽहमेभिः सर्वैरार्त्विज्यैर्ऋत्विक्कर्मभिर्ऋत्विक्कर्मार्थं पर्यैषिषं पर्येषणं कृतवानस्मि । अन्विष्य भगवतो वा अहमवित्त्वाऽलब्ध्वाऽन्यानृत्विजोऽवृषि वृतवानस्मि ॥ २ ॥

भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥

अद्यापि भगवान् उ एव मे मम सर्वैरार्त्विज्यैर्ऋत्विक्कर्मार्थमस्त्वित्युक्त उषस्तिस्तथाऽस्त्वित्यङ्गीकृतवान् । अथैवमपि तर्हि तथाऽप्येते पूर्वं वृता एव प्रस्तोत्रादयो मया समतिसृष्टा अनुज्ञाताः सन्तः स्तुवतां स्तुतिं कुर्वताम् । त्वया त्वेतत्कार्यं यावत्त्वेभ्यः

प्रस्तोत्रादिभ्यस्त्वं धनं दद्याः प्रयच्छसि तावन्मम दद्या इत्युक्तस्तथाऽस्त्विति यजमान उवाच ॥ ३ ॥

**अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्क-तमा सा देवतेति ॥ ४ ॥**

अथोषस्तिवचनश्रवणानन्तरमेनमुषस्तिं प्रस्तोता विनयेनोपससादोपजगाम । गत्वा त्वनुवादपूर्वकं पृच्छति—**प्रस्तोतर्या देवतेति** । उक्तार्थम् । इत्येव मा मां भगवानवो-चत्कतमा सा देवतेति ॥ ४ ॥

**प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्यु-ज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथो-क्तस्य मयेति ॥ ५ ॥**

पृष्ट उषस्तिः प्राण इति परमात्मैवेति होवाच । सर्वाणि ह वा इमानि भूतानि स्थावरज-ङ्गमानि प्राणमेवाभिसंलक्ष्य संविशन्ति प्रविशन्ति प्रलयकाले । तथोत्पत्तिकाले च प्राणमभ्यु-ज्जिहते प्राणादेवोद्गच्छन्तीति परमात्मलिङ्गात्सैषा प्राणशब्दाभिधा परात्मदेवता प्रस्तावम-न्वायत्ता । तां चेदविद्वान्प्रास्तोष्यः प्रस्तावनं कृतवानसि विद्वत्सन्निधौ सत्यां तर्हि तथोक्तस्य मूर्धा ते विपतिष्यतीत्यनेन प्रकारेण मयोक्तस्य ते तव तत्काल एव मूर्धा व्यपतिष्य-दिति ॥ ५ ॥

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथम-न्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ६ ॥**

अथ हैनमुद्गातोपससादेति समानम् ॥ ६ ॥

**आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतो-द्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ७ ॥**

**अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ८ ॥**

आदित्यमुच्चैः सन्तमूर्ध्वं सन्तं गायन्ति शब्दयन्ति ॥ ७ ॥ ८ ॥

**अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ९ ॥**

**इति प्रथमाध्यायस्यैकादशः खण्डः ॥ ११ ॥**

---

इमानि भूतान्यन्नमेवाऽऽत्मानं प्रति प्रतिहरमाणानि जीवन्ति । तथा च प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः । अस्य फलं तु प्राणाद्यापत्तिः कर्मसमृद्धिर्वेति बोद्धव्यम् । पुनर्वचनं त्वादरार्थम् ॥ ११ ॥

इति प्रथमाध्यायस्यैकादशः खण्डः ।

---

(अथ प्रथमाध्यायस्य द्वादशः खण्डः ।)

---

अन्नालाभादुक्ता कष्टा गतिर्मा भूदित्यन्नलाभायोपासनान्तरं प्रतिजानीते—

**अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥**

**अथेति** । अथान्नलाभप्रसक्त्यनन्तरं यतोऽन्नमपेक्षितमतोऽन्नलाभहेतुः शौवः श्वभिर्दृष्ट उद्गीथः सामविशेषः प्रस्तूयत इति शेषः । तत्र प्रतिपत्त्यर्थमाख्यायिकामाह— **तद्धेति** । तत्तत्र बको ह नामतो दल्भस्यापत्यं दाल्भ्यो ग्लावो नामतो मित्राया अपत्यं मैत्रेयः स्वाध्यायं स्वाध्यायार्थं स्वग्रामाद्बहिरुद्वव्राजाऽऽगतवान् ॥ १ ॥

**तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति॥ २ ॥**

तस्मा ऋषयेऽनुग्रहार्थं स्वाध्यायेन तोषितः श्वेतः शुक्लः श्वा मुख्यप्राणदेवः श्वरूपं गृहीत्वा प्रादुर्बभूव । तं श्वानमन्ये क्षुद्राः श्वानो वागादय उपसमीयुरेत्योचुः । किमन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयतु कुतो यतोऽशनायाम बुभुक्षिताः स्मो वै वयमिति ॥२॥

**तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयांचकार ॥ ३ ॥**

एवमुक्तस्ताञ्शुन उवाच किं यूयमिहास्मिन्नेव प्रदेशे प्रातःकाले मा मामुपसमीयातेति । दैर्घ्यं छान्दसं प्रामादिकं वोपगच्छत । तत्रैवं श्ववचने श्रुते सति ह बको दाल्भ्यो ग्लावो मैत्रेयः प्रतिपालयांचकार प्रातःकालप्रतीक्षणं कृतवान् । अतोऽवगम्यते तस्य स्वाध्यायपठनमन्नार्थमिति ॥ ३ ॥

स्वाध्यायेन देवतापरितोषं सदृष्टान्तमाह—

**ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिं चक्रुः ॥ ४ ॥**

**ते ह यथेति ।** यथा ज्योतिष्टोमादौ बहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा अध्वर्युप्रमुखा यजमानपश्चिमाः संरब्धाः संलग्नाश्चान्योन्यस्य गृहीतवसनाश्चात्वालदेशं प्रतीदं सर्पणं यथा स्यात्तथा सर्पन्ति भ्रमणं कुर्वन्ति । एवमेव ते श्वानो ह्यन्योन्यस्य मुखे पुच्छं गृहीत्वा ससृपुरासृप्तवन्तः । पश्चात्ते श्वानो ह समुपविश्य सम्यगुपविश्य हिं चक्रुर्हिंकारं गानं कृतवन्तः ॥ ४ ॥

**ओ३मदा३मों३ पिबा३मों३देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ऽऽहरदन्नपते३ऽन्नमिहा२ऽऽहरा२ऽऽहरो३मिति ॥ ५ ॥**

**इति प्रथमाध्यायस्य द्वादशः खण्डः ॥१२ ॥**

---

कथम्, ओंकारोऽत्र गानार्थः । अदामाशनं करवाम पिबाम पानं करवाम द्योतनाद्देवो जगतो वरणाद्वरुणः प्रजानां पालनात्प्रजापतिः सर्वस्य जगतः प्रसवितृत्वात्सविता, अन्नमिह प्रकृतप्रदेशेऽस्मभ्यमाहरदाहरतु अन्नस्य प्रसवितृत्वात् । हेऽन्नपतेऽन्नमिहाऽऽहराऽऽहरेत्यभ्यास आदरार्थ इत्येवं हिं चक्रुरित्यर्थः ॥ ५ ॥

इति प्रथमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

( अथ प्रथमाध्यायस्य त्रयोदशः खण्डः । )

---

भक्त्युपासनमुक्त्वा स्तोमाक्षरोपासनमाह—

**अयं वाव लोको हाउकारो वायुर्हाइकारश्च-**
**न्द्रमा अथकारः । आत्मेहकारोऽग्निरीकारः॥१॥**

**अयं वावेति ।** अयं पृथिवीलोको वावैव हावु(उ)कारः पृथिवीलोकदृष्ट्या हावु(उ)कारः स्तोभ उपास्य उक्तत्वादेव न सामान्याकाङ्क्षा । तथात्वे च तेषामस्माभिश्छान्दोग्यार्थ-प्रकाशिकायामुक्तत्वान्नेहोच्यते विस्तृतिभयात् । वायुर्हाइकारः स्तोभ इति चिन्तनीयम् । चन्द्रमा अथकारः स्तोभः । आत्मा प्रसिद्धः, इहकारः स्तोभः, अग्निरीकारः ॥ १ ॥

**आदित्य ऊकारो निहव एकारो विश्वे देवा**
**औहोयिकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं**
**या वाग्विराट् ॥ २ ॥**

आदित्य ऊकारः । निहव आह्वानमेकारः स्तोभः । विश्वे देवा औहोयिकारः । प्रजापतिर्हिं-कारः । प्राणः स्वरः स्तोभः । अन्नं या स्तोभः । वाक्स्तोभो विराट् ॥ २ ॥

**अनिरुक्तस्त्रयोदशः स्तोभः संचरो हुंकारः ॥ ३ ॥**

**अनिरुक्तो**ऽव्यक्तकारणात्मा हुंकारस्त्रयोदशसंख्यापूरकः स्तोमः स च संचरः । शाखा-भेदेन हुंकारो हुप्कारो वेति विकल्प्यमानस्वरूपः ॥ ३ ॥

स्तोभोपासनफलमाह—

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवान-**
**न्नादो भवति य एतामेवꣳ साम्नामुपनिषदं**
**वेदोपनिषदं वेद ॥ ४ ॥**

**इति प्रथमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥**

**इति च्छन्दोग्योपनिषद्ब्राह्मणे प्रथमोऽ-**
**ध्यायः समाप्तः ॥ १ ॥**

---

**दुग्ध इति ।** एतदुक्तार्थं य एतां यथोक्तामेवमुक्तरीत्या साम्नां सामावयवस्तोभाक्षर-विषयामुपनिषदं दर्शनं वेदोपास्ते, अस्मा उपासकाय । अभ्यासः पूर्ववदध्यायपरिसमा-प्त्यर्थो वा ॥ ४ ॥

इति प्रथमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

१ ख. °थंनुका° । २ ख. °स्यः । उक्ता° ।

यस्मिनुद्गीथगामिन्यमृतरसतमत्वादिभावैरुपेत-
प्राणव्यानार्कदृष्टीरविनयनानिविष्टे स्वरात्मेक्षणं च ।
कृत्वा विप्राः क्रियायामधिकमपि फलं कर्ममात्राल्लभन्ते
तस्योंकारस्य वाच्यं हृदि गतममलं भावयेदात्मतत्त्वम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यान-
न्दाश्रमविरचितायां छान्दोग्यव्याख्यायां मिताक्षरायां
प्रथमः प्रपाठकः ॥ १ ॥

---

( अथ द्वितीयाध्यायस्य प्रथमः खण्डः॥ १ ॥ )

---

सामावयवोपासनमुक्त्वा फलार्थिनां समस्तसामोपासनमाह—

**ॐ । समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तद-सामेति ॥ १ ॥**

**समस्तस्य खल्विति ।** समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्ति-कस्य च खलु साम्न उपासनं साधु शोभनं समस्तसाधुगुणदृष्टिं कुर्यादिति फलितार्थः। कुतः। यत्खलु लोके साधु शोभनं तत्सामेत्याचक्षते कुशला यदसाधु तदसामेत्याचक्षते ॥ १ ॥

**तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपा-गादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैन-मुपागादित्येव तदाहुः ॥ २ ॥**

किंच, तत्तत्रैवं साध्वसाधुविवेककरणे। अथो उपायविशेषमप्याहुस्तज्ज्ञाः । किं यस्माद्यस्यासाधुत्वप्राप्त्याशङ्का स एनं राजानं सामन्तं वा साम्ना सामनीत्योपागादुपग-तवानिति यत्तद्व्यवहारे शोभनकार्यदर्शी न सत्यं यं साधुना शोभनेन मार्गेणैनमुक्त-मुपागादित्याहुः। यत्र पुनरसाम्नैनमुपागादिति तत्। तद्व्यवहारे बन्धनाद्यशुभकार्यं पश्यन्तो साधुनैनमुपागादित्येवमाहुः ॥ २ ॥

एवं कार्यगम्यं साधुत्वाद्युक्त्वाऽनुभवगम्यं तदाह—

**अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यद-साधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥**

**अथोताप्याहुरिति ।** अथानन्तरमुत स्वात्मनि हर्षहेतौ जाते सति नोऽस्माकं साम बतेति विहृष्टाः सन्त आहुः । अस्यैव विवरणं यत्साधु भवति साधु बतेत्येव तत्राऽऽहुर्विपर्यये जातेऽसाम नो बतेति खिद्यमाना आहुः । अस्यैवं विवरणं यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥

साधुदृष्ट्या समस्तसामोपासनफलमाह—

**स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥**

**इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥**

---

**स य एतदिति ।** स यः कश्चिदेवमुक्तप्रकारेण साधुगुणमेतत्समस्तं साम विद्वानुपास्त एनमुपासकं प्रति साधवो धर्माः श्रुत्याद्यविरुद्धा आ च गच्छेयुरिति यत्तदभ्याशो ह क्षिप्रमेव न केवलमागच्छेयुरेवापि तूप च नमेयुश्च भोग्यत्वेनोपतिष्ठेयुश्चेत्यर्थः ॥ ४ ॥

इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ द्वितीयाध्यायस्य द्वितीयः खण्डः । )

---

**लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिंकारः । अग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥**

तत्र लोकेषु पृथिव्यादिषु पाञ्चविधं पाञ्चभक्तिकं भेदेन पञ्चप्रकारकं साधुदृष्टिविशिष्टं समस्तं सामोपासीत लोकदृष्ट्या पञ्चविधं सामोपासीतेत्यर्थः । कथं पृथिवी हिंकारो हिंकारभक्तिः पृथिवीदृष्ट्योपास्या । अग्निः प्रस्तावः । प्रस्तावभक्तिरग्निदृष्ट्योपास्या । अन्तरिक्षमुद्गीथभक्तिः । आदित्यः प्रतिहारः । द्यौर्निधनं द्युदृष्ट्या निधनभक्तिरुपास्या । इत्येवमूर्ध्वेपूर्ध्वमुखव्यवस्थितलोकदृष्ट्या सामोपासनमुक्तम् ॥ १ ॥

**अथाऽऽवृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

अथोक्तोपासनानन्तरमावृत्तेष्ववाङ्मुखेषु लोकादिषु पञ्चविधसामपाठ उच्यते । कथं, द्यौर्हिंकार इत्यादिपूर्ववत् ॥ २ ॥

एतदुपासनफलमाह—

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते॥३॥**

**इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥२ ॥**

---

**कल्पन्त इति ।** अस्मा उपासकायोर्ध्वा आवृत्ताश्च प्राणिनां गत्यागतिविशिष्टा लोका भोग्यत्वेन कल्पन्ते समर्था भवन्ति । य एवमुक्तरीत्या विद्वाँल्लोकेषु **पञ्चविधं** सामोपास्ते ॥ ३ ॥

इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथ द्वितीयाध्यायस्य तृतीयः खण्डः । )

---

लोकस्थितेर्वृष्टिनिमित्तत्वात्तदनन्तरं वृष्टिदृष्ट्या पञ्चविधं सामोपासनमाह—

**वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥**

**वृष्टौ पञ्चविधमिति ।** वृष्टौ पञ्चविधं सामोपासीतेत्यादि समानम् ॥ १ ॥

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते॥ २ ॥**

**इति द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

---

उद्गृह्णाति तन्निधनं यदुद्ग्रहणं वृष्ट्यपाकरणं तन्निधनम् । तस्य फलमाह—**वर्षतीति ।** अस्मा उपासकाय स्वेच्छातः पर्जन्यो वर्षति वर्षयति वेत्यवं सुबोधम् ॥ २ ॥

इति द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

( अथ द्वितीयाध्यायस्य चतुर्थः खण्डः । )

---

वृष्टिहेतुकाब्दृष्ट्या तदुपासनमाह—

**सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः**

प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥

सर्वास्वप्सु पञ्चविधं सामोपासीतेति । मेघो यत्संप्लवत एकीभावेनेतरेतरं घनी भवति ॥ १ ॥

न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

स उपासको न हाप्सूदके प्रैति म्रियतेऽनिच्छन्नप्सुमांश्च मरुस्थलीष्वपि यथेष्टोदकं भवति शेषं सुबोधम् ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथ द्वितीयाध्यायस्य पञ्चमः खण्डः । )

---

अम्बुहेतुकर्तृदृष्ट्या तदुपासनमाह—

ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

इति द्वितीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

ऋतुषु पञ्चविधं सामोपासीतेति । कल्पन्ते भोग्यत्वेन व्यवतिष्ठन्तेऽस्मा उपासकायर्तवो वसन्तादयः । ऋतुमानार्तवैश्च भोगैः संपन्नो भवति । समानमन्यत् ॥१॥२॥

इति द्वितीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

( अथ द्वितीयाध्यायस्य षष्ठः खण्डः । )

---

सम्यग्व्यवस्थितर्तुहेतुकपशुदृष्ट्या तदुपासनमाह—

**पशुषु पञ्चविधꣳ सामोपासीताजा हिंकारोऽ-**
**वयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः**
**पुरुषो निधनम् ॥ १ ॥**

**पशुष्विति** । अजाश्छागाः । अवयो मेषाः ॥ १ ॥

**भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं**
**विद्वान्पशुषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥**

**इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

पशुमान्भवति । पशुफलैश्च भोगादिभिर्युज्यते । शेषं सुबोधम् ॥ २ ॥

इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथ द्वितीयाध्यायस्य सप्तमः खण्डः । )

---

पशुप्रसूतपयोघृतादिहेतुका प्राणस्थितिरित्यतस्तदनन्तरं प्राणदृष्ट्या तदुपासनमाह—

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत**
**प्राणो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं**
**प्रतिहारो मनो निधनं परोवरीयाꣳसि वा**
**एतानि ॥ १ ॥**

**प्राणेष्विति** । प्राणेषु प्राणादीन्द्रियेषु पञ्चविधं परोवरीयः परं परमुत्तरोत्तरं वरीयस्त्वगुणवत्प्राणदृष्टिविशिष्टं सामोपासीत । प्राणानां कथं तद्गुणत्वमित्यत आह—**परोवरीयांसि वा एतानीति** । एतानि प्राणादीन्द्रियाणि परोवरीयांस्युत्तरोत्तरं वरीयस्त्वगुणविशिष्टानि वै प्रसिद्धम् ॥ १ ॥

**परोवरीयोहास्य भवति परोवरीयसो ह लोका-**
**ञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परो-**
**वरीयः सामोपास्त इति तु पञ्चविधस्य ॥२॥**

**इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥**

---

परोवरीयो हास्येति फलोक्तिः सुबोधा । इति त्वित्येवं खलु पञ्चविधस्य साम्न उपासनमुक्तमित्यर्थः ॥ २ ॥

इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

( अथ द्वितीयाध्यायस्याष्टमः खण्डः । )

अथ सप्तविधस्य वाचि सप्तविधꣳ सामो-
पासीत यत्किंच वाचो हुमिति स हिंकारो
यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥

अथानन्तरं सप्तविधस्य साधुदृष्टिविशिष्टस्योपासनमारभ्यते । वाचि सप्तविधं वाक्पद-वाच्यशब्दसामान्यदृष्ट्या सप्तविधं सप्तभक्तिकं सामोपासीत । कथं यत्किंच वाचः शब्द-सामान्यस्य हुमिति शब्दविशेषः स हिंकारभक्तिविशेषः । हुमिति शब्ददृष्ट्या हिंकार-श्चिन्तनीयः । यत् प्र इति शब्दः स प्रस्तावभक्तिः । यत्, आ इति शब्दः स आदिः॥१॥

यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो
यदुपेति स उपद्रवो यन्नीति तन्निधनम्॥ २ ॥

यदुदितिशब्दः स उद्गीथः । यत्प्रतीतिशब्दः स प्रतिहारः । यदुपेतिशब्दः स उप-द्रवः । यन्नीतिशब्दस्तन्निधनं भक्तिः ॥ २ ॥

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवान-
न्नादो भवति य एतदेवं विद्वान्वाचि सप्तवि-
धꣳ सामोपास्ते ॥ ३ ॥

इति द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

दुग्धेऽस्मा इत्युपासनफलवाक्यमुक्तार्थम् ॥ ३ ॥

इति द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

( अथ द्वितीयाध्यायस्य नवमः खण्डः )

वाचकशब्ददृष्ट्या सामोपासनमुक्त्वा वाच्यदृष्ट्या तदाह—

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत
सर्वदा समस्तेन साम मां प्रति मां प्रतीति
सर्वेण समस्तेन साम ॥ १ ॥

**अथ खल्वमुमादित्यमिति** । कुत आदित्यदृष्ट्या सप्तविधं सामोपास्यमित्यत आह—**सर्वदेति** । येनाऽऽदित्यः सर्वदा समो वृद्धिक्षयाभावात्तेन हेतुना साम । किंच येन मां प्रति मां प्रतीति सर्वभूताभिमुखतया सर्वेण समस्तेन च साम ॥ १ ॥

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिंकारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिं कुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**

तस्मात्तस्मिन्नादित्य इमानि वक्ष्यमाणानि भूतानि पुरोदयाद्यवयवविभागेनान्वायत्तान्यनुगतान्यादित्यमुपजीव्य स्थितानीति विद्याज्जानीयात् । कथमेतत् । तस्याऽऽदित्यस्य उदयात्पुरा पूर्वं यद्रूपं स हिंकारः । तद्धिंकारभक्त्यात्मकमादित्यसाम्नो रूपम् । पशवो गवादयोऽन्वायत्ता अनुगता भक्तिरूपमुपजीवन्ति । अत्र प्रमाणमाह—**तस्मादिति** । हि यस्मादेतस्याऽऽदित्याख्यस्य साम्नो हिंकारभाजिनो हिंकारभक्तिभजनशीलाः पशवस्तस्मात्ते पशवः प्रागुदयाद्धिं कुर्वन्ति ॥ २ ॥

**अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥**

अथ यत्प्रथमोदिते सवितरि रूपं स प्रस्तावः । तत्प्रस्तावभक्त्यात्मकमस्यादिऽऽत्यसाम्नो रूपं मनुष्या अन्वायत्ताः । कुतः, हि यस्मादेतस्याऽऽदित्यसाम्नः प्रस्तावभाजिनो मनुष्याः । तस्मात्ते मनुष्याः प्रस्तुतिकामा अपरोक्षस्तुतिकामाः प्रशंसाकामाः परोक्षस्तुतिकामाः ॥ ३ ॥

**अथ यत्संगववेलायाꣳ स आदित्यस्तदस्य वयाꣳस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायाऽऽत्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥**

अथ रश्मीनां जगन्मण्डलेन गवां वा वत्सैः सह संगवः संबन्धो यस्यां वेलायां भवति सा सङ्गववेला तस्यां सङ्गववेलायां यदादित्यरूपं स आदिरोंकाराख्या भक्तिस्तदादिभक्त्यात्मकमस्याऽऽदित्यसाम्नो रूपं वयांसि पक्षिणोऽन्वायत्तानि । कुतः, हि यस्मादेतस्याऽऽदित्यसाम्नो वयांसि पक्षिण आदिभाजीन्याद्याख्यभक्तिभजनशीलानि तस्मात्तानि वयांस्यन्तरिक्षे गगन आरम्बणानि निरालम्बान्यात्मानं शरीरमादाय परिपतन्ति प्लवन्ते ॥ ४ ॥

**अथ यत्संप्रति मध्यंदिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥**

अथ यत्संप्रति ऋजुमध्यंदिनेऽन्यूनानतिरिक्तमध्याह्न आदित्यस्य रूपं स उद्गीथस्तदुद्गीथभक्त्यात्मकमस्याऽऽदित्यस्य रूपं देवा अन्वायत्ताः । कुतो हि यस्माद्देवा एतस्याऽऽदि-

त्यसाम्न उद्गीथभाजिनः । तस्मात्ते देवाः सत्तमाः प्राजापत्यानां प्रजानां मध्ये विशिष्टतमाः ॥ ५ ॥

**अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः॥६॥**

अथ यन्मध्यंदिनादूर्ध्वमपराह्णात् प्राक् सवितृरूपं स प्रतिहारस्तत्प्रतिहारभक्त्यात्मकमस्याऽऽदित्यसाम्नो रूपं गर्भाजाठरवर्तिनः प्राणिनोऽन्वायत्ताः । कुतो हि यस्माद्गर्भा एतस्याऽऽदित्यस्य साम्नः प्रतिहारभक्तिभाजिनस्तस्मात्ते गर्भा योनेरुपरिष्टाज्जठरं प्रति प्रतिहृताः सन्तो नावपद्यन्ते नाधः पतन्ति ॥ ६ ॥

**अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्याऽऽरण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षꣳश्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥**

अथ यदपराह्णादूर्ध्वमस्तमयात्प्राग्रवे रूपं स उपद्रवः । तदुपद्रवभक्त्यात्मकमस्याऽऽदित्यस्य रूपम् । अरण्ये भवा आरण्याः पशवोऽऽन्वायत्ताः । कुतो हि यस्मादेतस्याऽऽदित्यसाम्न उपद्रवभक्तिभाजिनः पशवः । तस्मात्त आरण्याः पुरुषं दृष्ट्वा भीताः सन्तः कक्षं गुल्मवल्ल्यादि श्वभ्रं गर्तं गुहां प्रत्युपद्रवन्त्युपगच्छन्ति ॥ ७ ॥

**अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ८ ॥**

**इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ९ ॥**

---

अथ यत्प्रथमास्तमितेऽदर्शनं जिगमिषति सवितरि यद्रूपं तन्निधनम् । तन्निधनभक्त्यात्मकमस्याऽऽदित्यसाम्नो रूपं पितरोऽर्यमादयोऽन्वायत्ताः । कुतो हि यस्मात्पितर एतस्याऽऽदित्यसाम्नो निधनभक्तिभाजिनस्तस्मात्तानपि तान्निदधति पितृपितामहादिरूपेण दर्भेषु निक्षिपन्ति तदर्थं तत्र पिण्डं स्थापयन्ति । एवमुक्तरीत्याऽमुमादित्यं सप्तविधमवयवशः सप्तधा विभक्तं सामोपास्ते तस्य तदापत्तिः फलमिति वाक्यशेष इत्यर्थः ॥ ८ ॥

इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथ द्वितीयाध्यायस्य दशमः खण्डः । )

---

अथ भक्तिनामाक्षरोपासनमाह—

**अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳ सामो- पासीत हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥**

**अथ खल्विति ।** अथ रश्म्यादित्यसामोपासनानन्तरं खल्वात्मसंमितं मृत्युमोक्षहेतुत्वेन परमात्मना संमितं तुल्यमतिमृत्यु मृत्यवतिक्रमणसाधनं सप्तविधं सामोपासीत । कथं हिंकार इति त्र्यक्षरं प्रथमभक्तिनाम प्रस्ताव इति त्र्यक्षरं तत्प्रस्तावभक्तिनाम हिंकारनाम्ना समं समसंख्याकम् ॥ १ ॥

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥**

आदिरिति व्यक्षरं नाम प्रतिहार इति चतुरक्षरम् । ततस्तस्मात्प्रतिहारनामाक्षरादेकमक्षरमपच्छिद्येहाऽऽदिभक्तिनामाक्षरयोः प्रक्षिप्ते सति तदादिभक्तिनाम प्रतिहारभाक्तिनाम्ना समम् ॥ २ ॥

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥**

उद्गीथ इति त्र्यक्षरं नामोपद्रव इति चतुरक्षरम् । एतद्द्वयं त्रिभिस्त्रिभिरक्षरैः संख्यया समं भवति । एकं त्वक्षरमतिशिष्यतेऽवशिष्यते तदवशिष्टमक्षरमेकमपि सत्त्र्यक्षरं चिन्तनीयमतस्तदेकमपि त्र्यक्षरं पूर्वेण समम् ॥ ३ ॥

**निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराणि ॥ ४ ॥**

निधनमिति त्र्यक्षरं तन्निधननाम पूर्वेण सममेव भवति । तानि ह वा एतानि सप्तभक्तिनामाक्षराणि द्वाविंशतिः संपन्नानि ॥ ४ ॥

**एकविꣳशत्याऽऽदित्यमाप्नोत्येकविꣳशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥**

तत्रैकविंशत्यक्षरसंख्ययाऽऽदित्यं मृत्युं प्राप्नोति । कुतो यस्मादितोऽस्माल्लोकादसावादित्य एकविंशो वै एकविंशतिसंख्यापूरणः । द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य

एकविंश इति श्रुत्यन्तराद्द्वाविंशेनाक्षरेणाऽऽदित्यान्मृत्योः परं स्थानं जयति प्राप्नोति । तदादित्यात्परं स्थानं नाकं कं सुखं तन्न भवतीत्यकं तन्न विद्यते यत्र तन्नाकं सुखं तत्परं स्थानं विशोकं मानसदुःखरहितम् ॥ ५ ॥

उक्तमेव संक्षिप्य बुद्धिसौकर्यार्थमाह—

**आप्नोति हाऽऽदित्यस्य जयं परो हास्याऽऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥ ६ ॥**

**इति द्वितीयाध्यायस्य दशमः खण्डः ॥ १० ॥**

---

**आप्नोतीति** । इहैकविंशतिसंख्ययाऽऽदित्यस्य जयमाप्नोति । आदित्यजयाच्चानन्तरं द्वाविंशतिसंख्यया परो जयोऽस्योपासकस्य भवति । कस्य स य एतदेवमित्याद्युक्तार्थम् । अभ्यासः सप्तविधसामोक्तेः समाप्त्यर्थः ॥ ६ ॥

इति द्वितीयाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथ द्वितीयाध्यायस्यैकादशः खण्डः । )

---

विना नामग्रहणं सामोपासनमुक्त्वा गायत्रसामोपासनफलमाह—

**मनो हिंकारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥**

**मनो हिंकार इति** । हिंकारे मनोदृष्टिः कर्तव्या । समानमन्यत् । प्राणो मुख्यप्राणः । एतदुक्तं गायत्रं साम प्राणेषु वागादिषु प्रोतं प्रतिष्ठितम् ॥ १ ॥

मनआदिदृष्ट्या गायत्रसामोपासनफलमाह—

**स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतम् ॥ २ ॥**

**इति द्वितीयाध्यायस्यैकादशः खण्डः ॥ ११ ॥**

---

**स य इति ।** य एव तद्गायत्रं सामैवमुक्तरीत्या प्राणेषु प्रोतं वेदोपास्ते स उपासकः प्राणी प्राणाविकलो भवति । सर्वं शतवर्षपरिमितमायुरेति प्राप्नोति । ज्योगुज्ज्वलः परोपकारसमर्थः संजीवति प्रजया पशुभिश्च महान्भवति । एतदुपासनाङ्गभूतं व्रतमाह—**महामना इति ।** अक्षुद्रचित्तः स्यात्तदेव व्रतं गायत्रसामोपासकस्येत्यर्थः ॥ २ ॥

इति द्वितीयाध्यायस्यैकादशः खण्डः ॥ ११ ॥

———

( अथ द्वितीयाध्यायस्य द्वादशः खण्डः । )

———

समग्रप्राणस्यैव मन्थनकर्तृत्वसंभवात्प्राणदृष्ट्यनन्तरं मन्थनादिदृष्टिं रथंतरे साम्नि विदधाति—

अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद्रथंतरमग्नौ प्रोतम् ॥ १ ॥

**अभिमन्थति स हिंकार इति ।** हिंकारेऽग्न्यभिमन्थनदृष्टिः कर्तव्या । अग्नेरुपशमः सावशेषनाशः । संशयो निरवशेषः । उभयत्रापि निधनदृष्टिः कर्तव्या ॥ १ ॥

स य एवमेतद्रथंतरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

———

ब्रह्मवर्चसी प्रवृत्तस्वाध्यायतेजो ब्रह्मवर्चसं तद्वान्ब्रह्मवर्चसी । अन्नादो दीप्ताग्निः । प्रत्यङ्ङग्निमग्नेरभिमुखं नाऽऽचामेन्न भक्षयेन्न निष्ठीवेच्छ्लेष्मनिरसनं च न कुर्यात् । समानमन्यत् ॥ २ ॥

इति द्वितीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

———

( अथ द्वितीयाध्यायस्य त्रयोदशः खण्डः । )

---

उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोर्मन्थनसामान्यान्मन्थनादिदृष्ट्यनन्तरं वामदेव्ये साम्नि मैथुन्यदृष्टिं विदधाति—

**उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥**

**उपमन्त्रयत इति** । उपमन्त्रयते स्त्रिया सह संकेतं करोति पशुकर्मार्थं ज्ञपयते वस्त्रादिना प्रीणयति स्त्रियम् । स्त्रिया सह शेत एकपर्यङ्कमारोहति । प्रति स्त्रीं सह शेते स्त्रिया अभिमुखीभूतः शेते । कालं गच्छति मिथुनकर्मणा कालातिक्रमणं भवति तत्कर्मणः समाप्तिं गच्छति ॥ १ ॥

**स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न कांचन परिहरेत्तद्व्रतम् ॥ २ ॥**

**इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥**

---

मिथुनी भवत्यविधुरो भवति । प्रजायते प्रजोत्पद्यते । अमोघरेता भवति । न कांचन कांचिदपि स्त्रियं समागमार्थिनीं स्वं तल्पमुपगतां परिहरेद्यावदुपासनम् । न तु सर्वदेत्यर्थः ॥ २ ॥

इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

( अथ द्वितीयाध्यायस्य चतुर्दशः खण्डः । )

---

आदित्यस्य प्रजाप्रसवहेतुत्वात्तद्धेतुमैथुन्यदृष्ट्यनन्तरमादित्यदृष्टिं बृहत्साम्नि विदधाति—

**उद्यन्हिंकार उदितः प्रस्तावो मध्यंदिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥ १ ॥**

उद्यन्हिंकार इति । उद्यन्सविताऽस्तंमयन्नस्तं गच्छन् ॥ १ ॥

स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्य-
न्नादो भवति सर्वमायुरेति ज्योग्जीवति महा-
न्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न
निन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

तेजस्वी त्वग्गतकान्तिमान् ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

( अथ द्वितीयाध्यायस्य पञ्चदशः खण्डः । )

---

आदित्यकार्यपर्जन्यदृष्टिं वैरूपसाम्नि विदधाति—

अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स
प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति
स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं
पर्जन्ये प्रोतम् ॥ १ ॥

अभ्राणीति । अभ्राण्यब्भरणावस्थानि मेघजातानि मेघ उदकसेक्तृत्वावस्थः ॥ १ ॥

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाꣳ-
श्च सुरूपाꣳश्च पशूनवरुन्धे सर्वमायुरेति ज्यो-
ग्जीवति महान्प्रजया पशुभिर्भवति महान्की-
र्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

सरूपान्समानरूपान्विरूपान्विसदृशरूपानजाविप्रभृतीन्पशूनवरुन्धे प्राप्नोति ॥ २ ॥

इति द्वितीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

१ क °स्तमयदस्तं ।

( अथ द्वितीयाध्यायस्य षोडशः खण्डः । )

पर्जन्यदृष्टिं कार्यमृतुदृष्टिर्वैराजसाम्नि विदधाति—

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥ १ ॥

स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तूंन्न निन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

**वसन्तो हिंकार इति ।** सुबोधम् ॥ १ ॥ २ ॥

इति द्वितीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

( अथ द्वितीयाध्यायस्य सप्तदशः खण्डः । )

संमावृत्तर्तुकार्यलोकदृष्टिं शाक्वरे साम्नि विदधाति—

पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥

**पृथिवी हिंकार इति ।** शक्वर्य इति नित्यं बहुवचनान्तः ॥ १ ॥

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

१ ख. सम्यग्वृत्तमृ° ।

लोकी भवतिलोकपालेन संयुज्यते ॥ २ ॥

इति द्वितीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

( अथ द्वितीयाध्यायस्याष्टादशः खण्डः । )

---

लोककार्थपशुदृष्टिं रैवते साम्नि विदधाति—

अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥ १ ॥

स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

**अजा हिंकार इति ।** रेवत्य इति नित्यं बहुवचनान्तः ॥ १ ॥ २ ॥

इति द्वितीयाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

( अथ द्वितीयाध्यायस्यैकोनविंशः खण्डः । )

---

पशुदेवतादृष्ट्यनन्तरं लोमाद्यङ्गदृष्टिं यज्ञायज्ञीयसाम्नि विदधाति—

लोम हिंकारस्त्वक्प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

**लोम हिंकार इति ।** अङ्गेषु देहावयवेषु ॥ १ ॥

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥

इति द्वितीयाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥

---

अङ्गी भवतिसर्वाङ्गो भवति । नाङ्गेन हस्तपादादिना विहूर्छति कुटिलो विकलो भवति । संवत्सरं मज्ज्ञो मांसानि नाश्नीयान्मत्स्यमपि यावज्जीवं मज्ज्ञो नाश्नीयादिति वा व्रतमित्यर्थः ॥ २ ॥

इति द्वितीयाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥

---

( अथ द्वितीयाध्यायस्य विंशः खण्डः । )

---

अङ्गप्रतिष्ठिताग्न्यादिदृष्टिं राजने साम्नि विदधाति—

**अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् ॥ १ ॥**

**अग्निर्हिंकार इति ॥ १ ॥**

**स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवताना९ सलोकता९ सार्ष्टिता९ सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥ २ ॥**

**इति द्वितीयाध्यायस्य विंशः खण्डः ॥ २० ॥**

---

देवतानामग्न्यादीनां सलोकतां समानलोकतां सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावमेकदेहदेहित्वम् । अत्र वाशब्दो लुप्तो द्रष्टव्यः समुच्चयासंभवादित्यर्थः ॥ २ ॥

इति द्वितीयाध्यायस्य विंशः खण्डः ॥ २० ॥

---

( अथ द्वितीयाध्यायस्यैकविंशः खण्डः । )

---

देवताकार्यत्रयीविद्यादृष्टिं सामसामान्ये विदधाति—

**त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वया९सि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतम् ॥ १ ॥**

**त्रयी विद्या हिंकार इति ॥ १ ॥**

**स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वꣳह भवति ॥ २ ॥**

एतत्सामसामान्यमात्रं नामविशेषानिर्देशात्सर्वं ह सर्वेश्वरो भवति ॥ २ ॥

अत्र मन्त्रं संवादयति—

**तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥ ३ ॥**

**तदेष इति ।** तत्तस्मिन्नुक्तेऽर्थ एष श्लोको मन्त्रोऽप्यस्ति—यानि त्रीणि त्रीणि त्रयीविद्यादीनि पञ्चधा पञ्चप्रकारेण हिंकारादिविभागैः प्रोक्तानि तेभ्यः पञ्चत्रिकेभ्यो ज्यायो महत्तरं परं व्यतिरिक्तमस्यैव व्याख्याऽन्यद्वस्त्वन्तरं नास्ति न विद्यते तत्रैव सर्वस्यान्तर्भावात् ॥ ३ ॥

**यस्तद्वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥४॥**

**इति द्वितीयाध्यायस्यैकविंशः खण्डः ॥ २१ ॥**

---

अतो यस्तद्यथोक्तं सर्वात्मकं साम वेद स सर्वं वेद सर्वज्ञो भवति । किंच सर्वा दिशो दिक्स्थाः पुरुषा अस्मा एवंविदे बलिमुपहारं हरन्ति प्रापयन्ति सर्वमास्मि भवामीत्येवमेव तत्सामोपासीतैतदेवास्य व्रतम् । द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ ४ ॥

इति द्वितीयाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

---

( अथ द्वितीयाध्यायस्य द्वाविंशः खण्डः । )

---

उक्तसामोपासनप्रसङ्गेन कर्मफलोपयोगिस्वरादिविज्ञानमुपदिशति—

**विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ॥ १ ॥**

**विनर्दीति ।** साम्नः संबन्धि विशेषो नर्दः स्वरविशेषो वृषभकूजितसमो यस्मिन्गानेऽस्ति तद्विनर्द्युद्गानमहं वृणे । पशव्यं पशुभ्यो हितमिति । अग्नेरग्निदैवत्यमुद्गीथ उद्गानमनिरुक्त इद-

ग्विधोऽयमित्येवं विशेषतोऽनिरुक्तः स्वरः प्रजापतेः प्रजापतिदैवत्यः। निरुक्तः स्पष्टः स्वरविशेषः सोमस्य। मृदु कोमलं श्लक्ष्णमनवच्छिन्नं च गानं वायोः। श्लक्ष्णं बलवच्च प्रयत्नाधिक्यान्निर्वर्त्यं गानमिन्द्रस्य, क्रौञ्चं क्रौञ्चपक्षिनिनदसमं गानं बृहस्पतेः। अपध्वान्तं भिन्नकांस्यसमं गानं वरुणस्य। तानेतान्सर्वान्स्वरविशेषानुपसेवेत परं तु वारुणं त्वेकं वर्जयेत् ॥ १ ॥

स्वरविशेषविज्ञानपूर्वकोद्गानकाले चिन्तनीयमाह—

**अमृतत्वं देवेभ्य आगायानीत्यागायेत्स्वधां**
**पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः**
**स्वर्गं लोकं यजमानायान्नमात्मन आगायानी-**
**त्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत॥ २ ॥**

**अमृतत्वमिति।** अमृतत्वं देवेभ्योऽहमुद्गायानि साधयानीत्येवं ध्यायन्नागायेत्, आशां प्रार्थनां प्रार्थितम्। शेषं सुबोधम्। उक्तमेव विशदीकुर्वन्नुपसंहरति—**इत्येतानीति।** इत्येवमुक्तरीत्यैतान्यमृतत्वादीनि मनसा ध्यायन्नप्रमत्तः स्वरोष्मादिभ्यः प्रमादमकुर्वन्स्तुवीत ॥ २ ॥

उद्गातुः केनाप्याक्षिप्तस्य प्रतीकारज्ञानाय स्वरादिदेवताज्ञानमुपदिशति—

**सर्वे स्वरा इन्द्रस्याऽऽत्मानः सर्व ऊष्माणः**
**प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं**
**यदि स्वरेषूपालभेतेन्द्रꣳ शरणं प्रपन्नोऽभूवं स**
**त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥**

**सर्वे स्वरा** इति। सर्वे स्वरा अकारादय इन्द्रस्य बलकर्मणः प्राणस्याऽऽत्मानो देहावयवस्थानीयाः। सर्व ऊष्माणः शषसहाः प्रजापतेर्विराजः कश्यपस्य चाऽऽत्मानः स्वरूपभूताः। सर्वे स्पर्शाः कादयो मावसाना व्यञ्जनानि मृत्योर्यमस्याऽऽत्मानः स्वरूपभूताः। अथाऽऽक्षेपप्रतीकारोपायमाह—**तं यदीति।** तमेवं स्वरदेवताविदुद्गातारं यदि स्वरेषूपालभेत स्वरस्त्वया दुष्टः प्रयुक्त इत्युपालम्भं कुर्यात्तदैनमुपालम्भकर्तारं प्रति ब्रूयात्किं स्वरान्प्रयुञ्जानोऽहमिन्द्रं प्राणं स्वरेश्वरमाश्रयं शरणं प्रपन्नः प्राप्तोऽभूवमतः स इन्द्रो यत्तत्र वक्तव्यं तत्त्वा त्वां प्रति वक्ष्यत्युत्तरं दास्यतीति ॥ ३ ॥

**अथ यद्येनमूष्मसूपालभेत प्रजापतिꣳ शरणं**
**प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयादथ**
**यद्येनꣳ स्पर्शेषूपालभेत मृत्युꣳ शरणं प्रपन्नोऽ-**
**भूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥**

पेक्ष्यति पेषणं करिष्यति । धक्ष्यति भस्मी करिष्यति समानमन्यत् ॥ ४ ॥

देवताज्ञानबलेनोद्गात्रादिनाऽप्रमत्तेन भवितव्यमिति शिक्षयंश्चिन्तनीयमाह—

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥**

**इति द्वितीयाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥**

सर्वे स्वरा घोषवन्तो नादवन्तो बलवन्तः प्रयत्नाधिक्योपेताः । किंचेन्द्रे प्राणात्मनि बलं ददान्यादधानीत्येवं चिन्तयेदिति शेषः । अग्रस्ता अन्तरप्रवेशिता अनिरस्ता बहिरप्राक्षिप्ता विवृताः विवृतप्रयत्नोपेताश्च । लेशेन शनैरनभिनिहिता अनभिक्षिप्ताः । अतिद्रुतोच्चारणेन वर्णो वर्णान्तरे यथा निक्षिप्तो न भवति तथा वक्तव्याः । समानमन्यत् ॥५॥

इति द्वितीयाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

( अथ द्वितीयाध्यायस्य त्रयोविंशः खण्डः । )

अधिकृताधिकाराण्यङ्गावबद्धान्युपासनान्युक्त्वा स्वतन्त्राधिकारिगोचरमुपासनं विधातुं तावत्कर्मफलस्य क्षयिष्णुत्वं वक्तुं धर्मान्विभजते—

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥ १ ॥**

**त्रयो धर्मस्कन्धा इति ।** त्रयस्त्रिसंख्याकाः धर्मस्य स्कन्धा विभागास्तत्र यज्ञोऽग्निहोत्रादिरध्ययनं नियमपूर्वकं वेदग्रहणादि दानं बहिर्वेदि द्रव्यप्रदानमित्येष प्रथम एको धर्मस्कन्धो गृहस्थानां निर्दिश्यते । तपः कृच्छ्रचान्द्रायणादिरेव द्वितीयो वानप्रस्थानां निर्दिश्यते । ब्रह्मचार्याचार्यकुलवास्याचार्यकुले वसनशील उपकुर्वाणोऽपि भवति । अतो विशिनष्टि—अत्यन्तं यावज्जीवं भिक्षाटनादिनियमपूर्वकमात्मानं देहमाचार्यकुलेऽवसादयान्क्षिपन् । आचार्यकुलवासिनैष्ठिक एव तृतीयधर्मस्कन्धः । सर्व एते त्रयोऽप्याश्रमिणः

पुण्यो लोको येषां ते पुण्यलोका भवन्ति संन्यासिनस्तूक्तधर्मफलेभ्यो भिन्नं फलमाह— **ब्रह्मसंस्थ इति ।** ब्रह्मणि परात्मनि सम्यगव्यभिचारिणी स्थितिर्निष्ठा यस्य परमात्मसाक्षात्कारवान् । स ब्रह्मसंस्थः परिव्राडेवामृतत्वं पुण्यफलविलक्षणं मोक्षमेति प्राप्नोति । यद्वा प्रणवप्रतीकब्रह्मसंस्थस्तदुपासनं कुर्वन्परिव्राण्मात्रः क्रमेणामृतत्वमेतीत्यर्थः प्रणवप्रकरणादवगम्यते ॥ १ ॥

तमुपास्यं प्रणवं सर्वसारत्वकथनेन महीकुर्वंस्तदुत्पत्तिमाह—

**प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति ॥ २ ॥**

**प्रजापतिरिति ।** लोकानुद्दिश्य तेषु सारजिघृक्षयाऽभ्यतपदभिध्यानं कृतवान् । तेभ्योऽभितप्तेभ्यो लोकेभ्यो येयं सारभूता त्रयी विद्या संप्रास्रवत्प्रजापतेर्मनसि प्रत्यभात् तां च त्रयीं विद्यां पूर्ववदभ्यतपत् । तस्या अभितप्तायास्त्रयीविद्याया एतान्यक्षराणि भूर्भुवः स्वरिति व्याहृत्याख्यानि संप्रास्रवन्त प्रास्फुरन् ॥ २ ॥

**तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः संप्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णोंकार एवेदꣳ सर्वमोंकार एवेदꣳ सर्वम् ॥ ३ ॥**

**इति द्वितीयाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥**

---

तान्यक्षराण्यभ्यतपत्तेभ्योऽभितप्तेभ्योऽक्षरेभ्य ओंकारः संप्रास्रवत् । तत्स्वरूपं सदृष्टान्तमाह—**तद्यथेति ।** तत्त्रोंकारस्वरूपे दृष्टान्तो यथा शङ्कुना पर्णनालेन सर्वाणि पर्णानि पत्रावयवजातानि संतृण्णानि विद्धानि व्याप्तान्येवमोंकारेण परमात्मप्रतीकभूतेन सर्वा वाक्शब्दजातं संतृण्णा । अत ओंकार एवेदं सर्वम् । अभ्यास आदरार्थः ॥ ३ ॥

इति द्वितीयाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

---

( अथ द्वितीयाध्यायस्य चतुर्विंशः खण्डः । )

---

अथ पुनः प्रकृतसामादिज्ञानविधानार्थं तदज्ञाने दोषमाह—

**ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवन॰**
**रुद्राणां माध्यंदिन॰ सवनमादित्यानां च**
**विश्वेषां च देवानां तृतीयसवनम् ॥ १ ॥**

**ब्रह्मवादिनो वदन्तीति ।** ब्रह्मवादिनो वेदार्थज्ञा वदन्ति । किं यत्प्रातःसवनं प्रसिद्धं तद्वसूनामेतैश्च सवनेशानैरष्टवसुभिरयं लोको वशीकृतः । तथा रुद्रैर्माध्यंदिनसवनेशानैरन्तरिक्षलोको वशीकृतः । आदित्यैश्च विश्वैर्देवैस्तृतीयसवनेशानैर्द्युलोको वशीकृतः ॥ १ ॥

**क्व तर्हि यजमानस्य लोक इति स यस्तं न**
**विद्यात्कथं कुर्यादथ विद्वान्कुर्यात् ॥ २ ॥**

एवं सति परिशिष्टलोकाभावात्तर्हि देहपातादूर्ध्वं यजमानस्य क्व लोकः कुत्र स्थानम् । यो यजमानस्तस्य(स्तं) लोकस्वीकरणोपायं सामहोममन्त्रोत्थानलक्षणं न विद्यान्न जानीयात्सोऽज्ञः कथं कर्म कुर्यादित्याक्षेपे प्राप्त उत्तरमाह—**अथेति** । अथशब्दो हेत्वर्थः । यस्मात्सामाद्यज्ञाने यज्ञाद्यकरणं प्राप्तं तस्माद्वक्ष्यमाणसामाद्युपायं विद्वान्कुर्यात् ॥ २ ॥

तदेवाऽऽह—

**पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हप-**
**त्यस्योदङ्मुख उपविश्य स वासव॰ सामाभि-**
**गायति ॥ ३ ॥**

**पुरेति ।** प्रातरनुवाकशस्त्रस्योपाकरणात्प्रारम्भात्पुरा पूर्वं गार्हपत्यस्य जघने पश्चाद्भाग उदङ्मुख उपविश्य यजमानो वासवं वसुदैवत्यं सामाभिगायति ॥ ३ ॥

तदेव दर्शयति—

**लो३कद्वारमपावा३र्णु ३३ पश्येम त्वा वय॰**
**रा ३३३३३ हु ३म् आ ३३ ज्या ३ यो ३ आ**
**३२१११ इति ॥ ४ ॥**

**लोकद्वारमिति ।** लोकस्य पृथिवीलोकस्य द्वारं प्राप्तये यद्द्वारं तदपावृण्वपगतावरणं कुरु । हेऽग्ने त्वां वयं पश्येम राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीप्रयुक्तभोगाय । अत्र हुमादयो गानार्थाः । इतिशब्दः सामसमाप्तिद्योतकः ॥ ४ ॥

**अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते**
**लोकं मे यजमानाय विन्दैष वै यजमानस्य**
**लोक एताऽस्मि ॥ ५ ॥**

**अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ संप्रयच्छन्ति ॥ ६ ॥**

अथ तद्गानानन्तरं जुहोति होमं कुर्यात् । तन्मन्त्रमाह—**नम इति** । नमः पृथिवीभूताग्नये तुभ्यम् । पृथिव्यां वसतीति पृथिवीक्षित्तस्मै पृथिवीक्षिते तथा लोकक्षिते पृथिवीलोकनिवासायेति यावत् । मे मह्यं यजमानाय त्वं लोकं पृथिवीलोकं विन्द रक्षस्व यत एष वै पृथिव्याख्यो यजमानस्य लोकोऽतो यजमानोऽहमायुषः परस्तादूर्ध्वं मरणानन्तरमत्राऽस्मिन्पृथिवीलोक एताऽऽगन्ताऽस्मीति मन्त्रेण जुहोत्याहुतिप्रक्षेपं करोति । अथोत्थानमन्त्रमाह—**अपजहीति** । परिघं लोकद्वारार्गलमपजह्यपनयेति मन्त्रमुक्त्वोत्तिष्ठति । उक्तसामादिसिद्धं फलमाह—**तस्मा इति** । तस्मा एवं कृतवते यजमानाय वसवः प्रातःसवनं प्रातः सवनसंबद्धं पृथिवीलोकं संप्रयच्छन्ति ॥ ९ ॥ ६ ॥

एवमन्तरिक्षजयोपायं दर्शयति—

**पुरा माध्यंदिनस्य सवनस्योपाकरणाज्जघनेनाऽऽग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ॥ ७ ॥**

**लो३कद्वारमपावा३र्णू३३पश्येम त्वा वयं वैरा३३३३३हु ३ म् आ ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ ८ ॥**

**अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्मि ॥ ९ ॥**

**अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यंदिनꣳ सवनꣳ संप्रयच्छन्ति ॥ १० ॥**

**पुरा माध्यंदिनस्य सवनस्येति** । आग्नीध्रीयस्य दक्षिणाग्नेः पश्चाद्भागे । समानमन्यत् ॥ ७–१० ॥

---

१ ख.° त्थानंसम° ।

तथैव द्युलोकजयोपायं दर्शयति—

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति ॥ ११ ॥

लो३कद्वारमपावा३र्णू३३पश्येम त्वा वयꣳ स्वारा ३ ३ ३ ३ ३ हु३म् आ३३ ज्या ३ यो ३ आ ३२१११ इति ॥ १२ ॥

आदित्यमथ वैश्वदेवं लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयꣳ साम्रा ३३३३३ हु३म् आ३३ ज्या३यो३ आ ३२१११ इति ॥ १३ ॥

अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिभ्द्यो लोकं मे यजमानाय विन्दत ॥ १४ ॥

एष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहत परिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥

**पुरा तृतीयसवनस्येति** । आदित्यमादित्यदैवत्यं वैश्वदेवं वैश्वदैवत्यं च सामाभिगायति क्रमेण स्वाराज्याय द्युलोके स्वातन्त्र्याय साम्राज्याय स्वातन्त्र्यायैवेत्यर्थः । समानमन्यत् ॥ ११ ॥ १५ ॥

एवमुक्तसामादिविज्ञानफलमाह—

तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनꣳ संप्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ १६ ॥

इति द्वितीयाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

---

इति च्छान्दोग्योपनिषद्ब्राह्मणे द्वितीयोऽध्यायः ॥ २ ॥

---

**एष हेति** । एष ह वै यजमानो यज्ञस्य मात्रां यथा संभवेदथैवमुक्तरीत्या यथोक्तं सामादि वेद । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १६ ॥

इति द्वितीयाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

सामोपासितमनेकधा विदधतां गत्वा वने तप्यता-
माचार्ये मरणावधि स्थितिमतामप्यन्तवत्स्यात्फलम् ।
इत्येवं सहसाऽऽकलय्य यतितामाश्रित्य यं संव्रजे-
दोंकारात्मनि संस्थितस्तमनिशं वन्दे नृसिंह परम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यान-
न्दाश्रमविरचितायां छान्दोग्यव्याख्यायां मिताक्षरायां
द्वितीयः प्रपाठकः ॥ २ ॥

---

( अथ तृतीयाध्यायस्य प्रथमः खण्डः । )

---

एवं कर्माङ्गाश्रितान्युपासनानि समाप्य तत्फलभूतादित्यादिविषयं स्वतन्त्रोपासनमाह—

**ॐ । असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥**

**असौ वा आदित्यो देवमध्विति ।** असौ वै प्रसिद्धादित्यो देवानां वस्वादीनां मोद-हेतुत्वान्मध्वेव मधुदृष्ट्योपास्य इति यावत् । अतस्तस्य देवमधुनो भ्रामरमधुन इव द्यौर्द्युलोक एव तिरश्चीनवंशस्तिर्यग्गतवंश इति चिन्तयेत् । अन्तरिक्षमपूपः सवितृमध्वपूपो मरी-चयो मरीचिस्थाः सवित्राकृष्टभौमापः पुत्रा इव पुत्राः मध्वपूपच्छिद्रस्था भ्रमरभाजन-स्थानीयाः ॥ १ ॥

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः । ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

तस्य मध्वाश्रयस्य सवितुर्ये प्राञ्चः प्राच्यां दिशि गता रश्मयस्ता एवास्याऽऽदित्य-मधुनः प्रागञ्चनात्प्राञ्चः प्राच्यो मधुनाड्यः प्रसिद्धमधुन इव मध्वाधारच्छिद्राणि । ऋच ऋङ्मन्त्रा एव मधुकृतो भ्रमराः । ऋग्वेद ऋग्ब्राह्मणभागस्तद्विहितं कर्मैव पुष्पं पुष्प-स्थानीयम् । ताः प्रसिद्धा अमृता अमृतसाधनीभूता आपः पयःसोमाद्याहुतिसाधना अपूर्व-भूता अत्र पुष्पाश्रयस्थानीयाः । ता वा एताः पूर्वोक्तभ्रमरस्थानीया ऋचः ॥ २ ॥

**एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥**

एतमृग्वेदविहितं कर्म पुष्पस्थानीयमभ्यतपन्नभितस्तापमालोचनं रसनिस्रावार्थं व्यापारं कृतवत्यस्तत्कर्म निर्वर्तितवत्य इति यावत् । तस्यर्ग्वेदविहितकर्मणोऽभितप्तस्य ऋङ्मधुकरैर्नि-

---

१ क. कुतस्त° ।

कीर्तिस्तस्य यशो विश्रुतत्वं, तेजो देहगता दीप्तिरिन्द्रियं प्रसिद्धं वीर्यं सामर्थ्यमन्नाद्यमन्नं च तदाद्यं चान्नाद्यं रसो मध्वाख्योऽजायतोत्पन्नः ॥ ३ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहित॰ रूपम् ॥ ४ ॥

इति तृतीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

तदुत्पन्नं यशआदि मधु व्यक्षरद्विशेषेणाक्षरदगागमत् । गत्वा च तन्मध्वादित्यमितः पार्श्वत आदित्यस्य पूर्वभागमाश्रयदाश्रितवत् । तद्वै तदेवैतन्मधु प्रत्यक्षं यदेतदुद्यत आदित्यस्य रोहितं रक्तं रूपं दृश्यत इत्यर्थः ॥ ४ ॥

इति तृतीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ तृतीयाध्यायस्य द्वितीयः खण्डः । )

---

उक्तवंशादित्रयस्य सर्वेष्वपि मधुपर्यायेषु तन्त्रेणैव ध्येयत्वमभिप्रेत्य शुक्लादीनां नाडीभ्रमरपुष्पभेदानाह—

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजू॰ष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि यजू॰ष्येतं यजुर्वेदमभ्यतप॰स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य॰ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्ल॰ रूपम् ॥ ३ ॥

इति तृतीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ येऽस्य दक्षिणा रश्मय इत्यारभ्य क्षोभत इवेत्यन्तेन । यजूंष्येव यजुर्मन्त्रा एव । भ्रमरा इत्यादि पूर्ववत् ॥ १ ॥ २ ॥ ३ ॥

इति तृतीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथ तृतीयाध्यायस्य तृतीयः खण्डः । )

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णꣳ रूपम् ॥ ३ ॥

इति तृतीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

सामान्येव गीतिभावमापन्ना मन्त्रा एवेत्याद्यपि समानम् ॥ १ ॥ ३ ॥

इति तृतीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

( अथ तृतीयाध्यायस्य चतुर्थः खण्डः । )

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥

तद्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥

इति तृतीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

अथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः । इतिहासपुराणमाथर्वणब्राह्मणभागः प्रसिद्ध एव । तयोरपि पारिप्लवमाचक्षीतेत्यश्वमेधे विनियोगदर्शनात् । तथा च तदाख्यात-

मेव पुष्पमितिहासपुराणमन्त्राश्च भ्रमरा इति बोद्धव्यम् । तथाच पुष्पभ्रमरचिन्तनाविकल्पोऽगतिकः । आदित्यस्य परोऽतिशयेन कृष्णं रूपमित्यपि शास्त्रप्रत्यक्षम् ॥ १—३ ॥

इति तृतीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथ तृतीयाध्यायस्य पञ्चमः खण्डः । )

---

**अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवाऽऽदेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥**

**ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣲस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥**

**तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥**

गुह्या रहस्या एवाऽऽदेशाः । लोकद्वारमित्याद्युक्तोपदेशा भ्रमराः । ब्रह्मात्र प्रणव एव । आदित्यस्य मध्ये क्षोभत इव चलतीव समाहितचित्तस्य दृश्यते ॥ १—३

अथ ध्येयानुरूपभेदान्स्तौति—

**ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥**

**इति तृतीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

**ते वा एत इति ।** ते वै, एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः सारभूताः । कथं वेदा हि रसाः पूर्वमुक्तास्तेषां कर्मभावमापन्नानां वेदानां मध्य एते रोहितादिविशेषा रसा अत्यन्तं सारभूताः । किं तानि वा एतानि रोहितादिरूपाण्यमृतानाममृतानि । कथं वेदा ह्यमृताः पौरुषेयत्वे बुद्धिपूर्वाविचारितत्वेन नित्यत्वात् । तेषां वेदानां कर्मभावमापन्नानामेतानि रोहितादिरूपाण्यमृतानि ॥ ४ ॥

इति तृतीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

( अथ तृतीयाध्यायस्य षष्ठः खण्डः । )

---

अमृतानि ध्येयान्युक्त्वाऽमृतोपजीविनो देवतागुणाननुचिन्तनीयानुपदिशति—

**तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**तद्यत्प्रथमममृतमित्यादिपञ्चभिः खण्डैः** । तत्रोक्तेषु पञ्चस्वमृतेषु मध्ये यत्प्रथममममृतं रोहितरूपं तदमृतं वसवः प्रातःसवनेशाना अग्निना मुखेन प्रधानेनाग्निमुख्याः सन्त उपजीवन्त्युपभुञ्जते । लोकवद्ग्रासं कृत्वा प्राप्तं भक्षणं निषेधति—**न वै देवा अश्नन्ति न पिबन्तीति** । कथं तर्ह्युपजीवनमित्यत आह—**एतदेवेति** । एतदेवोक्तममृतं देवा दृष्ट्वोपलभ्य सर्वैरेव करणैरनुभूय तृप्यन्ति न तु केवलं चक्षुषैव । उक्तयशआद्यात्मकस्यामृतस्य श्रोत्रादिग्राह्यत्वात् ॥ १ ॥

तर्हि किं निरुद्यमा एव नेत्याह—

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

**एतदेव रूपमिति** । एतदेव रोहितरूपमभिलक्ष्य स्वभोगानवसरं बुद्ध्वाऽभिसंविशन्त्युदासते । भोगावसरे त्वेतस्माद्रूपादेतदमृतभोगनिमित्तमुद्यमं कुर्वन्त्युत्साहवन्तो भवन्ति लोकवत् ॥ २ ॥

उक्तध्येयस्य फलं ध्यानविधिमाह—

**स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

**स य इति** । यः कश्चिदेतदमृतं मध्वेवमृच एव मधुकृत इत्यादिना यथोक्तं वेदोपासीत स वसूनां मध्य एकोऽन्यतमो भूत्वा वसुभिः सहैक्यं प्राप्य । अग्निनैव मुखेनेत्यादि पूर्ववत् ॥ ३ ॥

कियन्तं कालमुपजीवतीत्यत आह—

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥**

**इति तृतीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

**स यावदिति** । स प्रथमामृतं वसूनां विद्वान्यावत्कालपर्यन्तमादित्योऽस्मदृष्ट्या पुरस्तात्प्राच्यां दिशि प्राचीदिग्गतैन्द्रीस्थैर्जनैर्यावत्कौबेर्यां मध्याह्नगः सवितोद्यन्दृश्यते । पश्चा-

दस्मद्दृष्ट्या पश्चिमायां दिश्यस्तमेता गन्ता पूर्वादिग्गतैन्द्रीस्थैरेव जनैर्दृश्यते तावद्वसूनां संबन्ध्याधिपत्यमैश्वर्यं स्वाराज्यं स्वराड्भावं स्वातन्त्र्यं पर्येता गन्ता भवतीत्यर्थः ॥ ४ ॥

इति तृतीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथ तृतीयाध्यायस्य सप्तमः खण्डः । )

---

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥४॥

इति तृतीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

द्विस्तावदैन्द्रीवासिभिर्दृश्यमानोदयास्तमयकालाद्विगुणितेन कालेनास्मद्दृष्ट्या[1] दक्षिणतो दक्षिणदिक्संयमिनीवासिभिरैन्द्र्यां मध्याह्न[2] उदेतोद्यन्दृश्यते । ऐन्द्र्यपेक्षया संयमिन्या द्विगुणकालावस्थायित्वात् । समानमन्यत् ॥ १–४ ॥

इति तृतीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

(अथ तृतीयाध्यायस्याष्टमः खण्डः ।)

---

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

---

१ ख. °तोऽस्मद्दृष्ट्याद° । २ क. °रैन्द्रीमध्यादुद्ग° ।

स य एतदेवममृतं वेदाऽऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्य स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

द्विस्तावत्ततो द्विगुणेन कालेन पश्चादस्मदृष्ट्या पश्चिमदिक्स्थवारुणीवासिभिः संयमिन्यां मध्याह्नग उदेतोद्यन्दृश्यते । अस्याः संयमिन्यपेक्षया द्विगुणावस्थायित्वात् । समानमन्यत् ॥ १—४ ॥

इति तृतीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

( अथ तृतीयाध्यायस्य नवमः खण्डः । )

---

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्य स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

द्विस्तावदुत्तरतोऽस्मदृष्ट्यपेक्षयोत्तरदिक्स्थकौबेरीवासिभिर्वारुण्यां मध्याह्नग उदेतोद्यन्दृश्यते । अस्यापि वारुण्यपेक्षया द्विगुणकालस्थायित्वात् ॥ १—४ ॥

इति तृतीयाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथ तृतीयाध्यायस्य दशमः खण्डः । )

---

**अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिब-न्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एत-देव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

**स यावदादित्य उत्तरत उदेता दक्षिणतोऽ-स्तमेता द्विस्तावदूर्ध्व उदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥**

**इति तृतीयाध्यायस्य दशमः खण्डः ॥ १० ॥**

---

ब्रह्मणा प्रजापतिना द्विस्तावदूर्ध्वमुदेताऽर्वागधस्तादस्तमेतेलावृतवासिभिर्जनैर्दृश्यते तेषां मानससुमेरुभ्यां प्राकारभूताभ्यां परित आवृत आदित्यप्रकाशत्वात् । तथाच पूर्वभोगका-लादुत्तरोत्तराणां वस्वादीनां द्विगुणो भोगकालस्तत्तदमृतध्यायिनामपि तावद्भोगकाल इति समुदायार्थः ॥ १ ॥ ४ ॥

इति तृतीयाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथ तृतीयाध्यायस्यैकादशः खण्डः । )

---

अथोक्तमधुविद्यायाः क्रमेण मृत्युपर्यवसायितां दर्शयितुमाह—

**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥**

**अथ तत इति** । अथोदयास्तमनेन प्राणिनां स्वकर्मभोगनिमित्तमनुग्रहं कृत्वा ततस्त-दनन्तरं सवितृरूपापन्नो विद्वानूर्ध्वो ब्रह्मीभूतः सन्नात्मन्युदेत्य स्वे महिम्नि प्रकाशं लब्ध्वा नैवोदेता नास्तमेता किंत्वेकलोऽद्वितीय एव मध्ये स्वात्मन्येव स्थाता । अवस्थातेतिप्रयोगादु-क्तक्रममुक्तौ विद्वदनुभवप्रकाशकमन्त्रं प्रमाणयति—**तदिति** । तत्तत्रोक्तेऽर्थे एष श्लोको मन्त्रो भवति ॥ १ ॥

कश्चिदादित्याह्लब्धब्रह्मोपदेशो मुक्तावस्थायां ब्रह्मणि स्थितो विमुक्तावस्थायां केनाचित्पृष्टः प्रोवाच—

**न वै तत्र न निम्लोच नोदियाय कदाचन ।**
**देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥**

नवै नैव तत्र ब्रह्मलोके त्वत्पृष्टमस्ति किं न निम्लोचेति । वर्णलोपश्छान्दसः । निम्लोचनमस्तमगमत्सविता, न चोदियाय नोद्गतः कदाचित्कस्मिंश्चित्काले । एतच्छ्रुतिपथेन द्रढयति—**देवा इति ।** भो देवा यूयं शृणुध्वं यथा मयोक्तं सत्यवचस्तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि माविरुध्येयाप्राप्तिर्ब्रह्मणो मा भूत् । इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥ १ ॥

उक्तोपासनं सफलमुपसंहरति—

**न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥**

**न ह वा इति ।** न ह वा अस्मा आदित्यात्मभूताय विदुषे किंचिदुदेति न निम्लोचति नास्तं गच्छति किंतु सकृत्सदा दिवा हैव दिवस एव स्वयं ज्योतिस्स्वरूपो भवति । कस्मै य एतां यथोक्तामेव वंशाद्युपेतां ब्रह्मणो वेदस्योपनिषदं गुह्यमुपासनं वेद तस्मा इत्यर्थः ॥ ३ ॥

उक्तां विद्यां गुरुशिष्यादिकथनेन स्तौति—

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥**

**तद्धैतदिति ।** तदेतन्मधुविज्ञानं ह ब्रह्मा हिरण्यगर्भः प्रजापतये विराज उवाच । प्रजापतिर्मनवे मनुः प्रजाभ्य इक्ष्वाक्वादिभ्य उवाच । किंच तद्धैतत्तदेतन्मधुब्रह्म ब्रह्मविज्ञानं होद्दालकनाम्न आरुणये ज्येष्ठाय पुत्राय पिताऽऽरुणिः प्रोवाच, उक्तवान् ॥ ४ ॥

**इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥**

अत इदानींतना अपीदं वावेदमेव तद्ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय पिता प्रब्रूयात् । प्रणाय्याय योग्यायान्तेवासिने शिष्याय वा प्रब्रूयात् ॥ ५ ॥

**नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥**

**इति तृतीयाध्यायस्यैकादशः खण्डः ॥ ११ ॥**

---

एतेभ्यो नान्यस्मै कस्मैचन प्रब्रूयादिति संबन्धः । अतो यद्यपि कश्चिदस्मा आचार्यायेमां पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि, धनस्य धनेन भोगोपकरणैः पूर्णां संपन्नामपि दद्यात्तथाऽपि तदेव मधुविद्यादानमेव ततो यथोक्तपृथिवीदानाद्भूयोऽधिकतरफलमिति । अभ्यास आदरार्थः ॥ ६ ॥

इति तृतीयाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

( अथ तृतीयाध्यायस्य द्वादशः खण्डः । )

---

सवितृद्वारकब्रह्मविद्यामुक्त्वा सवितृदेवस्य गायत्रीद्वारतामुपदिशति—

**गायत्री वा इदꣳ सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥ १ ॥**

**गायत्री वा इति** । गायत्री वा इदं सर्वं भूतं प्राणिजातं यदिदं किंच यत्किंच स्थावरजङ्गमं तदपि गायत्र्येव । कुतः, वाग्वै शब्दसामान्यं वै गायत्री । अतः सा सर्वात्मिका वाचकशब्दसामान्यस्य सर्ववाच्यसंबन्धात् । कथं वाचोऽपि गायत्रीत्वमित्यत आह—**वाग्वा इति** । यतो वाग्वा इदं सर्वं भूतं प्राणिजातं गायत्यसौ गौरित्येवं शब्दः इति शब्दयति त्रायते च मा भैषीरित्यादिरूपेण रक्षति चेत्येतस्माद्गायत्री ॥ १ ॥

अथास्याः पृथिवीशरीरहृदयप्राणात्मकत्वमाह—

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याꣳ हीदꣳ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥**

**येति** । या वै सा सर्वभूतरूपा गायत्री सेयं वाव सैव का येयं पृथिवी । कुतः, अस्यां पृथिव्यां हि यस्मादिदं सर्वं भूतं स्थावरजङ्गमं प्रतिष्ठितम् । एतदेव साधयति—**एतामेवेति** । एतामेव पृथिवीं नातिशीयते नातिवर्तते सर्वं भूतम् ॥ २ ॥

**या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पु-
रुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव
नातिशीयन्ते ॥ ३ ॥**

या वै सा पृथिवीयमेव सा, इयमेव सा तत्किं यदिदमस्मिन्पुरुषे जीवे शरीरम् । कुतः, अस्मिञ्शरीरे हि यस्मादिमे प्रसिद्धाः प्राणाः प्रतिष्ठिताः । यत एतदेव शरीरं प्राणा नातिशीयन्ते नातिवर्तन्ते ॥ ३ ॥

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्न-
न्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता
एतदेव नातिशीयन्ते ॥ ४ ॥**

यद्वै तत्पुरुषे शरीरं गायत्र्यात्मकमिदं वाव तत् । किं यदिदमस्मिन्पुरुषे जीवशरीरेऽन्तर्मध्ये हृदयं पुण्डरीकाख्यम् । कुतः, अस्मिन्हृदये हि यस्मादिमे प्राणाः प्रतिष्ठिताः । यत एतदेव हृदयं प्राणान्नातिशीयन्ते ॥ ४ ॥

अस्या ध्यानार्थमाह—

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्य-
नूक्तम् ॥ ५ ॥**

**सैषेति** । सैषा गायत्री छन्दोरूपा सती चतुष्पदा षड्विधा वाग्भूतपृथिवीशरीरहृदयप्राणभेदैः षट्प्रकारा । सर्वभूतसंबन्धसिद्ध्यर्थमुपदिष्टयोर्वाक्प्राणयोरपि गायत्रीभेदत्वमपि षड्विधेतिवचनात् । वागादिभेदैः षड्विधां गायत्रीं पाठक्रमेणानुगत्याजहल्लक्षणया गायत्र्यवस्थितं ब्रह्म चिन्तयेदिति प्रकरणार्थे मन्त्रं संवादयति—**तदेतदिति** । तत्रोक्ते प्रकरणार्थे स्थिते सत्येतद्गायत्रीमुखेनोक्तं ब्रह्म ऋचा मन्त्रेणाभ्यनूक्तं प्रकाशितम् ॥ ५ ॥

**तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दि-
वीति ॥ ६ ॥**

यावांश्चतुष्पात्षड्विधश्च विकार उक्तस्तावानस्य गायत्रीब्रह्मणो महिमा विभूतिविस्तार ऐश्वर्यमात्र एव केवलम् । ततस्माद्विकारलक्षणाज्ज्यायान्महत्तरो निर्विकारः पुरुषः । पुरुषः सर्वपूरणात्पुरि शयनाच्च । एतदेवोक्तं स्पष्टयति—**पाद इति** । अस्य गायत्रीब्रह्मण एकः पादः सर्वाणि गायत्र्यात्मनोक्तानि भूतानि, अस्य गायत्रीब्रह्मणस्त्रिपादमृतं पुरुषाख्यं दिवि द्योतनवति स्वात्मन्यवस्थितमिति ॥ ६ ॥

उक्तमुपास्यं गायत्र्यवच्छिन्नं ब्रह्म हृदयाकाश उपास्यमिति दर्शयितुं बाह्याकाशाद्य-भेदेन हृदयाकाशमाह—

**यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादा-काशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥**

**यद्वै तदिति ।** त्रिपादमृतमित्येवं यद्गायत्रीमुखेनोक्तं तद्ब्रह्मेदं वाव जाठरादिस्थान-प्रतीकत्वेनोच्यमानमेव । कथं योऽयं प्रसिद्धं पुरुषाच्छरीराद्बहिर्धा बहिराकाशो भौतिकः ॥ ७ ॥

**अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥**

योऽयं बहिर्धा पुरुषादाकाश आकाशोऽयमेव सः । कः, योऽयमन्तः पुरुषे शरीरमध्य आकाश आध्यात्मिकः ॥ ८ ॥

**अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेत-त्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनी१ श्रियं लभते य एवं वेद ।९ ॥**

**इति तृतीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥**

---

योऽयमन्तः पुरुष आकाशोऽयमेव सः । कः, योऽयमन्तर्हृदये पुण्डरीक आकाशः । नन्वत्र ध्येयस्य ब्रह्मणः परिच्छिन्नोत्पत्तिमत्त्वादि स्यादित्यत आह—**तदेतदिति ।** तदेतद्धार्दाकाशं ब्रह्म पूर्णं सर्वगतमेव, अत एवाप्रवर्ति न कुतश्चित्कचित्प्रवर्तितुं शीलमस्ये-त्यप्रवर्ति । तदुभयगुणकोपासनफलमाह—**पूर्णामिति ।** पूर्णामप्रवर्तिनीं चानुच्छित्तिध-र्मिकां च श्रियं विभूतिं लभते । य एवं यथोक्तं पूर्णमप्रवर्तिगुणं ब्रह्म वेद । मुख्यफलं तु ब्रह्मभावापत्तिरिति द्रष्टव्यम् ॥ ९ ॥

इति तृतीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

( अथ तृतीयाध्यायस्य त्रयोदशः खण्डः । )

---

अस्य ब्रह्मण उपास्त्यङ्गभूतां द्वारपालोपासनामाह—

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदि-**

त्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो
भवति य एवं वेद ॥ १ ॥

**तस्य ह वा इति** । तस्य ह वै प्रकृतस्य तस्यैतस्यानन्तरनिर्दिष्टस्य हृदयस्य पञ्च पञ्चसंख्याका देवसुषयो देवैः प्राणादित्यादिभिर्वक्ष्यमाणाः सुषयश्छिद्राणि हार्दब्रह्मप्राप्तिद्वाराणि । तत्रास्य परमात्मभवनस्य हृदयस्य स यः प्राङ्क्सुषिः स प्राणस्तद्द्वारा प्राणितीति प्राणः । तच्चक्षुः स आदित्यः । तदेतत्त्रयं तेजोऽन्नं च तदाद्यं चान्नाद्यमित्युपासीत । एतद्गुणोपासनफलमाह—**तेजस्वीति** । तेजस्वी कान्तिमानन्नादश्चाऽऽमयावित्वरहितो य एवं यथोक्तगुणकं वेद ॥ १ ॥

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रो-
त्रं स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत
श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥
अथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वा-
क्सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्र-
ह्मवर्चस्यन्नादो भवति य एवं वेद ॥ ३ ॥
अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स
पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत की-
र्तिमान्व्युष्टिमान्भवति य एवं वेद ॥ ४ ॥
अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स
आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी
महस्वान्भवति य एवं वेद ॥ ५ ॥

अथ योऽस्य दक्षिणः सुषिरित्यारभ्य ते वा एत इत्यतः प्राक्तनो ग्रन्थः समानार्थः । यशः ख्यातिः । ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः कीर्तिः परोक्षा ख्यातिः । व्युष्टिरपरोक्षा ख्यातिः । ओजो बलम् । महो महत् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

तस्य वा एतस्येत्याद्युक्तमुपसंहरति—

ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य
द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य
लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्र-
तिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरु-
षान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥

**ते वा एत इति** । ते वा एते यथोक्ताः पञ्च सुषिसंबद्धाः पञ्च ब्रह्मणो हार्दस्य पुरुषाः स्वर्गस्य मोक्षात्मकस्य हार्दब्रह्मणो लोकस्य स्वप्रकाशस्य द्वारपाला उपसंहृतमेतदुपासनं गौणं, मुख्यफलं विदधाति—**स य एतानिति** । अस्योपासकस्य कुले वीरः पुत्रो जायते, वीरपुरुषोपासनात् । य एतानित्यनुवादः । शेषं समानम् ॥ ६ ॥

गायत्र्युपाधिकस्य ह्युपास्यत्वेनोक्तस्यैव कौक्षेयज्योतिःप्रतीकत्वेनोपासनं विधातुमाह—

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ७ ॥**

**इति तृतीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥**

---

**अथेति** । अथशब्दो विद्यान्तरोपक्रमार्थः । अमुष्माद्दिवो द्युलोकात्, यत्परं ज्योतिः परं ब्रह्मैव दीप्यते । क विश्वतः पृष्ठेषु । एतस्यैव व्याख्या—सर्वतः संसारात्पृष्ठेषूपरितनेषु । अनुत्तमेषु न विद्यत उत्तमो येभ्य इति बहुव्रीहिरेव न तत्पुरुषशङ्केति । तदेव व्याचष्ट उत्तमेषु हिरण्यगर्भादिषु कार्यभूतेषु लोकेषु । अस्य कौक्षेयज्योतिषः संपत्तिमाह—**इदं वावेति** । यदुक्तब्रह्मेदं वावेदमेव तत् । किं यदिदं वक्ष्यमाणप्रमाणकमस्मिन्नन्तःपुरुषे शरीरमध्ये ज्योतिर्भौतिकमस्य दृष्टत्वश्रुतत्वगुणाभ्यां ज्ञानविधानार्थमदृष्टश्रुतलिङ्गगम्यत्वमाह—**तस्येति** । तस्य कौक्षेयब्रह्मण एषा दृष्टिर्दर्शनम् । का यत्र यस्मिन्कालेऽस्मिञ्शरीरे हस्तसंस्पर्शेनोष्णिमानमुष्णस्पर्शमेतद्विज्ञानं यथा स्यात्तथा विजानाति तस्य ब्रह्मण एषा श्रुतिः श्रवणम् । श्रवणोपायः को यत्र यस्मिन्काले कर्णावपिगृह्याङ्गुलिभ्यामपिधाय निनदमिव रथघोषमिव नदथुरिव ऋषभकूजितमिव ज्वलतोऽग्नेरिवोप समीपे स्वान्तर्गतमेव शब्दमेतच्छ्रवणं यथा स्यात् तथा शृणोति । एतद्गुणकं ध्यानं विदधाति—**तदेतदिति** । तदेतद्दिवः परस्ताद्दीप्यमानकौक्षेयज्योतिष्यध्यस्तं ब्रह्म दृष्टं च श्रुतं चेत्युपासीत दृष्टत्वश्रुतत्वगुणाभ्यामुपासितव्यम् । उपासन फलमाह—**चक्षुष्येति** । चक्षुष्यश्चक्षुषा दर्शनीयः श्रुतो विख्यातश्च भवति य एवमुभयगुणकं ब्रह्म वेद । अभ्यासस्तु फलवाद्विद्यादरार्थः ॥७॥

इति तृतीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

( अथ तृतीयाध्यायस्य चतुर्दशः खण्डः )

---

प्रतीकद्वारेण ब्रह्मोपासनमुक्त्वेदानीं प्रतीकं हित्वा सगुणब्रह्मोपासनमाह—

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥**

**सर्वं खल्विति** । तज्जलान् । तस्माद्ब्रह्मणो जगज्जायत इति तज्जं तस्मिँल्लीयत इति तल्लं तस्मिन्ननिति चेष्टते स्थितिकाल इति तदनं, तज्जं [च] तल्लं च तदनं च तेषां समाहारस्तज्जलानम् । अकारलोपश्छान्दसः। तज्जलान् । तज्जत्वात् । तल्लत्वात् । तदनत्वाच्चेत्येतस्माद्धेतोस्त्रिषु कालेषु ब्रह्मव्यतिरेकेण जगतोऽनिरूपणात्तदात्मत्वेनावशिष्टं सर्वं खल्विदं जगद्ब्रह्मैवेत्येवं निश्चयपूर्वकं शान्तो रागद्वेषादिरहितः सन्नुपासीत । शान्तो भवेदिति शमगुणविधिपरं वाक्यमित्यर्थः । शमं विधाय तद्वतः प्रयोजनोक्तिरूपहेतूक्तिपूर्वकं कर्तव्ये युनक्ति—**अथेति** । अथशब्दो हेत्वर्थः । यस्मात् । खलु क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषः । यथाऽस्मिँल्लोके वर्तमानदेहे भवति तथा तादृगेव क्रतुफलात्मक इतोऽस्माद्देहात्प्रेत्य मृत्वा भवति । तस्माच्छान्तः क्रतुमविचलप्रत्ययं कुर्वीत ॥ १ ॥

क्रतुविषयमाह—

**मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

**मनोमय इति** । मनुतेऽनेनेति मनोऽन्तःकरणं तन्मयस्तत्प्रायो मनोमयोऽत एव प्राणशरीरः प्राणो लिङ्गात्मा ज्ञानक्रियाशक्तिः स शरीरं यस्येति प्राणशरीरः । एतदुभयविशेषणं ब्रह्मजीवाभेदविवक्षया । भा दीप्तिश्चैतन्यलक्षणं रूपं यस्य स भारूपः । सत्या अवितथाः संकल्पा यस्येति सत्यसंकल्पः । आकाश आत्मा स्वरूपं यस्येत्याकाशात्मा, सर्वं जगल्लक्षणं कर्मास्येति सर्वकर्मा । सर्वे कामा दोषरहिता यस्येति सर्वकामः । सर्वे पुण्या गन्धा अस्येति सर्वगन्धः । सर्वे सुकरा रसा अस्येति सर्वरसोऽतः सर्वमिदमभ्यात्तो व्याप्त इति कर्तरि निष्ठा । तेनेदं सर्वं व्याप्तमिति यावत् । एवं गन्धादिग्रहणोक्त्येश्वरस्य[1] घ्राणादिप्र-

---

१ ख. °स्यग्रहणा°।

सङ्गं पराकरोति—**अवाकीति** । वाक् शब्द उच्यते यया सा वाक् । वागेव वाकः स विद्यते यस्य स वाकी न वाक्यवाकी । अयं वाक्प्रतिषेध इतरेन्द्रियादेरुपलक्षणपरः । न विद्यत आदरो यस्येत्यनादरोऽसंभ्रमः । अप्राप्तप्राप्तौ हि संभ्रमः । स नेश्वरस्य नित्यतृप्तत्वात् ॥ २ ॥

अस्मात्प्रत्यगात्माभिन्नत्वमाह—

**एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥**

**एष इति** । एष यथोक्तगुणः परमात्मा मे ममाऽऽत्माऽन्तर्हृदये हृदयपुण्डरीकमध्ये व्रीह्यादेरत्यन्तं सूक्ष्मादणीयानणुतरः । अस्य परिमाणस्य वास्तवत्वशङ्कां वारयति—**एष इति** । एभ्य उक्तपृथिव्यादित्रिलोकभ्यो ज्यायान्महत्परिमाणः ॥ ३ ॥

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसंभविताऽस्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥**

**इति तृतीयाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥**

---

उक्तगुणलक्षित एवेश्वरो ध्येयो न तु तद्गुणविशिष्ट इति शङ्कां वारयितुं सर्वकर्मेत्याद्येतद्ब्रह्मेत्यन्तं पुनर्वचनम् । उक्तोपासनमादेहपातादावर्तितं फलहेतुरित्यभिप्रेत्याऽऽह—**एतमित इति** । एवमुक्तोपास्यमितोऽस्माच्छरीरात्प्रेत्य मृत्वा संभविता प्रतिपत्तैवास्मीत्येवं यस्य विदुषोऽद्धा निश्चयः स्यान्न विचिकित्सा संशयोऽस्ति स उपास्यभावमाप्नोति नेतर इत्यर्थः । उक्तोपासनस्य सांप्रदायिकत्वमाह—**इति ह स्माहेति** । इत्येतच्छाण्डिल्यो नाम ऋषिराह स्मोक्तवान् । अभ्यासः क्रतुफलसंबन्धादादरार्थः ॥ ४ ॥

इति तृतीयाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

( अथ तृतीयाध्यायस्य पञ्चदशः खण्डः । )

---

अथास्य कुले वीरो जायत इत्युक्तपुत्रस्य दीर्घायुष्ट्वसिद्धये कोशविज्ञानमाह—

**अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति**
**दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ**
**स एष कोशो वसुधानस्तस्मिन्विश्वमिदꣳ**
**श्रितम् ॥ १ ॥**

**अन्तरिक्षेति** । अन्तरिक्षमुदरं सुषिरं यस्यासावन्तरिक्षोदरः । अन्तरिक्ष उदरदृष्टिः कर्तव्या । तथा भूमिबुध्नो मूलं यस्य स भूमिबुध्न इत्येवंभूतः । कोश इव कोशो हिरण्यादिनिक्षेपस्थानम् । दिशो हि प्रसिद्धा अस्य कोशस्य स्रक्तयः कोणाः । द्यौरेवास्य कोशस्योत्तरमूर्ध्वं बिलं मुखम् । स एष त्रैलोक्यात्मकः कोशो वसुधानः प्राणिनां कर्मफलाख्यं वसु धीयतेऽस्मिन्निति वसुधानः । कुतस्तस्मिन्कोणमध्य इदं समस्तं प्राणिनां कर्मफलं श्रितं स्थितम् ॥ १ ॥

कोशत्वेनोक्तासु दिक्ष्ववान्तरविभागमाह—

**तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् ॥ २ ॥**

**तस्येति** । कोशस्य प्राची दिक्प्राग्गतो विभागो जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिण इति जुहूरिति चिन्तयेत् । तथा दक्षिणा दिक्सहमाना नाम सहन्तेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना । प्रतीची पश्चिमा दिग्राज्ञी नाम । राज्ञा वरुणेनाधिष्ठितत्वात् । उदीची दिक्सुभूता नाम भूतिमद्भिः कुबेरादिभिरधिष्ठितत्वात् । तासां दिशां वायुरमृतभूतो वत्स इति चिन्तयेत् । तत्फलमाह—स य इति । यः कश्चित्पुत्रदीर्घायुष्ट्वकाम एवं यथोक्तममृतगुणं वायुं दिशां वत्सं वेद स उपासको न पुत्ररोदं पुत्रनिमित्तरोदनं रोदिति रोदनं करोति । उपदिष्टं सफलमुपसंहरति—**सोऽहमिति** । यतः सोऽहं पुत्रजीवितार्थ्येवं वायुं दिशां वत्सं वेदातोऽहं पुत्ररोदं पुत्ररोदनं मा रुदम् ॥ २ ॥

अथोक्तोपासनाङ्गं मन्त्रपञ्चकमाह—

**अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽ-**

मुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रप-
द्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

**अरिष्टमिति ।** अरिष्टमविनाशनं कोशं यथोक्तमहं प्रपद्ये प्रपन्नोऽस्मि, अमुनानेऽनामुकशर्मणा पुत्रप्रेम्णा निमित्तभूतेन तद्दीर्घायुष्ट्वं निमित्तं कृत्वेति यावत् । अमुनाऽमुनेत्यभ्यासो जपार्थः ॥ ३ ॥

प्राणं प्रपद्य इत्यादिमन्त्रचतुष्टयं समानम् । अथैषां द्वितीयादिमन्त्राणां प्रतीकग्रहणपूर्वकमभिप्रेतार्थमाह—

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इद॑
सर्वं भूतं यदिदं किंच तमेव तत्प्रापत्सि ॥ ४ ॥
अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽ-
न्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५
अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं
प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥
अथ यदवोच॑ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये
यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं
तदवोचम् ॥ ७ ॥

इति तृतीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

**स यदिति ।** सोऽहं मन्त्रात्मनां यदवोचं प्राणं प्रपद्य इति तत्र प्राणो वै प्राण एवेदं सर्वं भूतं प्राणिजातं यदिदं किं च तमेव सर्वात्मकं प्राणं तत्तेन प्राणप्रतिपादनेन प्रापत्स्यहं प्रतिपन्नोऽभूवम् । एवमेव तृतीयमन्त्रादिब्राह्मणम् । द्विर्वचनं यथोक्तविज्ञानादरार्थम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

इति तृतीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

( अथ तृतीयाध्यायस्य षोडशः खण्डः । )

---

पुत्रफलेन सह पितुः संबन्धश्च स्वदीर्घायुष्ट्वमन्तरा नेति स्वस्यापि तत्सिद्धयेऽप्युपासनान्तरमाह—

पुरुषो वाव यज्ञस्तस्य यानि चतुर्वि॑शति-
वर्षाणि तत्प्रातःसवनं चतुर्वि॑शत्यक्षरा गायत्री

---

१ क. °न्त्रपुष्ट्व° ।

**गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः**
**प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति ॥ १ ॥**

**पुरुषो वाव यज्ञ इति ।** पुरुषो वै जीवनविशिष्टकार्यकरणसंघात एव यज्ञः । पुरुषे स्वात्मनि यज्ञदृष्टिः कर्तव्या । तत्र तत्सादृश्यफलमाह—**तस्येति ।** तस्य पुरुषस्य यान्यायुषः प्राथमिकचतुर्विंशति वर्षाणि तत्प्रसिद्धं प्रातःसवनम् । अत्रापि साधर्म्यमाह—चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनमितिसंख्यासामान्यात् । किंच तत्प्रातःसवनमस्य पुरुषस्य यज्ञस्य च वसवो देवा अन्वायत्ता अनुगताः प्राणा वाव वागादय एव वसव इति । अत एते प्राणा हि यस्मादिदं सर्वं प्राणिजातं वासयन्ति ॥ १ ॥

उपासनाङ्गं कर्तव्यमुपदिशति—

**तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनꣳ सवन-मनुसंतनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥**

**तं चेदिति ।** तमुपासकं चेद्यद्येतस्मिन्प्रातःसवने वयसि किंचिन्मरणशङ्काकारणं व्याध्याद्युपतपेद्दुःखमुत्पादयेत्तदा स यज्ञसंपादी ब्रूयाज्जपेन्मन्त्रमिमम् । कोऽसौ प्राणा वसव इदमुक्तरूपं मे मम यज्ञरूपस्य प्रातःसवनं माध्यंदिनसवनेनाऽऽयुषा सहितमेकीभूतं संतनुत कुरुत । इतिशब्दः प्रार्थनामन्त्रभागसमाप्त्यर्थः । अहं यज्ञो यज्ञात्मको युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये मा विलोप्सीय मा विलुप्येय मा विच्छिद्येय । इतिशब्द आशीर्वादमन्त्रभागसमाप्त्यर्थः । अस्य सफलत्वमाह—**उद्धैवेति ।** सोऽनेन मन्त्रजपेन ध्यानेन च ततस्तस्मादुपतापादुदेत्युद्गम्य विमुक्तः सन्नगदो ह विरोगो भवति ॥२॥

**अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यं-दिनꣳ सवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप्त्रै-ष्टुभं माध्यंदिनꣳ सवनं तदस्य रुद्रा अन्वा-यत्ताः प्राणा वाव रुद्रा एते हीदꣳ सर्वꣳ रोद-यन्ति ॥ ३ ॥**

एवमेवाथ यानीत्यादि बोद्धव्यम् । एते प्राणा हि यस्मादिदं सर्वं रोदयन्ति मरणा-दिकाले ॥ ३ ॥

**तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यंदिनꣳ सवनं तृतीयसवन-**

---

१ क. च सर्वे दे° ।

मनुसंतनुतेति माऽहं प्राणाना॰ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ ४ ॥

अथ यान्यष्टाचत्वारि॰शद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारि॰शदक्षरा जगती जागतं तृतीयसवनं तदस्याऽऽदित्या अन्वायत्ताः प्राणा वावाऽऽदित्या एते हीद॰ सर्वमाददते ॥ ५ ॥ तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

एते हीदं सर्वं शब्दादिकमाददते गृह्णन्ति । समानमन्यत् ॥ ४ ॥ ५ ॥ ६ ॥

संमतिमाह—

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥

इति तृतीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

**एतद्ध स्म वा इति** । हवै, इत्यैतिह्यार्थः । महिदासो नामतः । इतराया अपत्यमैतरेयः । तद्यज्ञदर्शनं विद्वान् । रोगेण स्पृश्यमान आह स्म । किं हे रोग स त्वं म इति कर्मणि षष्ठी । किं कस्मादेतदुपतपनं यथा स्यात्तथोपतपसि । यतो योऽयं यज्ञः सोऽहमनेन त्वत्कृतोपतापेन न प्रेष्यामि न मरिष्याम्यतस्तव श्रमो वृथैवेत्येवं निश्चयः । स ह महिदास षोडशोत्तरवर्षशतमजीवत् । महिदासस्यैतत्फलत्वेऽप्यन्यस्य किमित्यत आह—**स ह षोडशमिति** । अन्योऽपि प्रजीवति ह षोडशोत्तरं वर्षशतं य एवं यथोक्तं यज्ञसंपादनं वेद जानातीत्यर्थः ॥ ७ ॥

इति तृतीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

( अथ तृतीयाध्यायस्य सप्तदशः खण्डः । )

---

अपरमपि यज्ञाङ्गसादृश्यात्संपाद्यत इत्याह—

**स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥**

**स यदशिशिषतीति ।** स यज्ञसंपादी पुरुषो यदशिशिषत्याशितुमिच्छति यत्पिपासति पातुमिच्छति यन्न रमते इष्टाद्यप्राप्तिनिमित्तमरमणं ता अस्य पुरुषस्य दीक्षाः । दुःखानुभवे दीक्षादृष्टिः कर्तव्या ॥ १ ॥

**अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥ २ ॥**

अथ यदश्नात्यशनं करोति यत्पिबति यद्रमते रतिमनुभवति तदुपसदैः पयोभक्षणवद्भिः समानतामेति ॥ २ ॥

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥**

अथ यद्धसति यज्जक्षति भक्षयति यच्च मैथुनं रतिं चरति, तत्स्तुतशस्त्रैरेव समानतामेति ॥ ३ ॥

**अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥**

अथ यत्तपो दानमार्जवमृजुताऽहिंसा सत्यवचनं ता अस्य पुरुषस्य दक्षिणा धर्मवृद्धिहेतुत्वात् ॥ ४ ॥

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥**

यस्माच्चैवं पुरुषो यज्ञस्तस्मात्तं यदा माता जनयिष्यति तदा तां लोकाः सोष्यतीत्याहुः । यदा च प्रसूता भवति तदा तामसोष्ट प्रसूतेत्याहुः । तदेतत्सोष्यत्यसोष्टेतिशब्दसंबन्धित्वमेवास्य पुरुषस्य विधियज्ञस्येव पुनरुत्पादनम् । पुरुषस्य मरणमेवावभृथो मरणे तद्दृष्टिः कार्या ॥ ५ ॥

विशिष्टपुरुषसंबन्धकीर्तनेन विद्यां स्तोतुं तदङ्गभूतं जपं विधातुमुपक्रमते—

**तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलाया-**

---

१ क. °नरूपमिति ।

**मेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राण-**
**सꣳशितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥**

**तद्धैतदिति ।** तद्धैतद्यज्ञदर्शनं घोरो नामत आङ्गिरसगोत्रोत्पन्नश्च कृष्णाय देवकीपुत्रायोक्त्वोवाच वक्ष्यमाणम् । कृष्णस्य विद्याफलमाह—**अपिपास इति ।** स कृष्ण एतद्दर्शनं श्रुत्वाऽपिपास एवान्याभ्यो विद्याभ्यो वितृष्णो बभूव । अतः श्रेष्ठेयं विद्या । किमुवाचेत्यस्यामपेक्षायां तदाह—**स इति ।** स कृष्णोऽन्तवेलायां मरणकाल एतन्मन्त्र-त्रयं प्रतिपद्येत जपेत्किं तदक्षितमक्षीणमक्षतं वाऽऽदित्यात्मकं तत्त्वमसि अच्युतं स्वरूपा-दप्रच्युतं तत्त्वं त्वमसि प्राणः श्वासः संशितं सम्यक्तनूकृतं प्राणश्वासौ संशितं सूक्ष्मं तत्त्व-मिति यावत् । इतिशब्दो यजुर्मन्त्रत्रयसमाप्तिद्योतकः । मन्त्रत्रयप्रतिपाद्ये सावित्रे तत्त्वे प्रतीतिदार्ढ्यायाऽऽह—**तत्रेति ।** तस्मिन्मन्त्रोक्तेऽर्थ एते द्वे ऋचौ मन्त्रौ विद्यास्तुतिपरौ भवतो न जपार्थौ ॥ ६ ॥

**आदित्प्रत्नस्य रेतसः । उद्वयं तमसस्परि**
**ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरं देवं**
**देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरु-**
**त्तममिति ॥ ७ ॥**

**इति तृतीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥**

---

तत्राऽऽदित्प्रत्नस्य रेतस इति प्रतीकत्वेन गृहीतप्रथमऋचः ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवीति शेषभागः । आदि[दि]त्यत्र तकारेच्छब्दावनर्थकौ । आकारश्च व्यवहितेन संबध्यते । प्रत्नस्य पुराणस्यात एव रेतसो वायुभूतस्य जगतः कारणस्य वास-रमहरहरिव स्वप्रकाशं ज्योतिः परः परमुत्कृष्टं दिवि द्योतनवति परब्रह्मणि यदिध्यते दीप्यते तदा पश्यन्त्या समन्ताद्भावेनानुभवन्ति साधनसंपन्नाः । उत् वयमिति छेदः । तमसोऽज्ञानात्प-रस्तादिति शेषः । यद्वा तमसोऽज्ञानस्य निवर्तकं ज्योतिरुत्तरं परज्योतिरपेक्षयोत्कृष्टतरमू-र्ध्वतरमादित्यस्थं परिपश्यन्तो वयं स्व आत्मीयं हृदिस्थं वा ज्योतिरिति पश्यन्त उभयावे-कीकृत्यावलोकयन्तो वयं देवत्रा देवेषु देवं द्योतनात्मकं जगतो रश्मीनां प्राणानां च सुष्ठ्वीक्षणात्सूर्यं सर्वज्योतिरपेक्षयोत्कृष्टतममुदगन्मोद्गतवन्तः प्राप्ताः । अभ्यासो यज्ञपरिक-ल्पनासमाप्त्यर्थः ॥ ७ ॥

इति तृतीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

( अथ तृतीयाध्यायस्याष्टादशः खण्डः । )

---

ब्रह्मणो गुणस्यैकदेशत्वेन मन आकाशश्चोक्तस्तद्ग्रहणाशक्तस्य मनआकाशयोः संपूर्णब्रह्मदृष्टिमाह—

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥**

**मनो ब्रह्मेत्युपासीतेति** । मनः प्रतीकं ब्रह्मेत्युपासीत । तत्रोपलभ्यमानत्वादिति दर्शनमध्यात्ममात्मानमधिकृत्य प्रवर्तमानम् । अथानन्तरमधिदैवतं देवताविषयमिदमुपासनमाकाशो ब्रह्मेति सूक्ष्मत्वादिसाधर्म्यात् । इत्युभयमादिष्टमुपदिष्टं भवति, अध्यात्मं चाधिदैवतं च ॥ १ ॥

**तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवाऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥ २ ॥**

तदेतदुभयविधं ब्रह्म चतुष्पात् । तत्र मनोब्रह्मणो वाक्पादो वक्तव्यः । तस्य मनसि प्रतिष्ठानात्पाद इव पादस्तथा प्राणो घ्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्मम् । अथाधिदैवतम् । अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद आकाशब्रह्मणः । आकाशेऽग्न्यादीनां लग्नत्वेनोपलभ्यमानत्वादित्येवमध्यात्ममधिदैवतं चेत्युभयविधं चतुष्पाद्ब्रह्माऽऽदिष्टमुपदिष्टं भवति ॥ २ ॥

आध्यात्मिकपादानामाधिदैविकैः पादैरधिष्ठेयतया संबन्धोऽनुचिन्तनीय इत्याह—

**वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥**

**वागेवेति** । मनोब्रह्मण इतरपादापेक्षया वागेव चतुर्थः पादः । सोऽग्निनाऽधिदैवतेन ज्योतिषा भाति च दीप्यते तपति चौष्ण्यं करोति । यद्वा घृताद्याग्नेयाशनेनेद्धा वाग्भाति च तपति च वदनोत्साहवती स्यात् । एतदुपासनफलमाह—भाति चेत्यादि सुबोधम् ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥

इति तृतीयाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

प्राणो घ्राणो गन्धग्रहणाय वायुना भाति । स इत्यादि सर्वं समानम् । दृष्टफलं त्वत्र ब्रह्मसंपत्तिरिति बोद्धव्यम् । अभ्यासस्तु दर्शनसमाप्त्यर्थः ॥ ४ ॥ ५ ॥ ६ ॥

इति तृतीयाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

( अथ तृतीयाध्यायस्यैकोनविंशः खण्डः । )

---

ब्रह्मणश्चतुर्थपादत्वेनोक्त आदित्ये सकलब्रह्मदृष्टिविधानार्थमाह—

आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् । तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥ १ ॥

**आदित्यो ब्रह्मेति** । इत्यादेश उपदेशः । तस्याऽऽदित्यस्योपव्याख्यानं क्रियते—तदाह—**असदिति** । इदं दृश्यमानं व्याकृतं जगदग्रे व्याकरणात्प्रागवस्थायामसदिवासदनभिव्यक्तनामरूपमेवाऽऽस न तु सर्वथाऽसदेव । तदेव सदासीत् । बीजस्योच्छूनतावत्कार्योन्मुखीभूतमासीत् । ततश्च तदेव समभवत् । प्राप्तपरिणामं सद्भूतसूक्ष्माकारेण बभूव । ततश्च तदेव पञ्चीकरणद्वारा । आण्डमिति दैर्घ्यं छान्दसम् । अण्डं जगद्गर्भं निरवर्तत, निर्वृत्तं तदण्डं संवत्सरस्य प्रसिद्धस्य मात्रां परिणामभिन्नस्वरूपमेवाशयत

स्थितम् । ततस्तदण्डं निरभिद्यत । निर्भिन्नस्य तस्याण्डस्य ते द्वे कपाले रजतं च सुवर्णं चाभवतां संवृत्ते ॥ १ ॥

**तद्यद्रजत॰ सेयं पृथिवी यत्सुवर्ण॰ सा द्यौर्यज्जरायु ते पर्वता यदुल्ब॰ समेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदक॰ स समुद्रः ॥ २ ॥**

ततस्तयोः कपालयोर्मध्ये यद्रजतं कपालं सेयं पृथिवी पृथिव्युपलक्षितमथाण्डकपालं यावत् । यत्सवर्णकपालं सा द्यौर्द्युलोकोपलक्षितमूर्ध्वकपालं यज्जरायु गर्भवेष्टनं स्थूलमासीत्ते पर्वताः । यदुल्बं सूक्ष्मं गर्भवेष्टनं तत्समेघो नीहारः, मेघेन सह वर्तमानो नीहारो हिमम् । जातस्य गर्भस्य देहे या धमनयः शिरास्ता नद्यो बभूवुः । यत्तस्य वस्तौ भवं वास्तेयमुदकं स समुद्रः ॥ २ ॥

**अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त्सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ ३ ॥**

अथ यत्तस्मिन्नण्डे यत्तद्गर्भरूपमजायत सोऽसौ प्रसिद्ध आदित्यः । तमादित्यं जायमानमनु घोषाः शब्दाः किंलक्षणा उलूलवो रलयोः सावर्ण्यादुरूरवो विस्तीर्णरवा उदतिष्ठन्नि॰ क्षिप्तवन्तः । सर्वाणि स्थावरजङ्गमानि भूतान्युदतिष्ठन् । तेषां च सर्वे कामा विषयाः स्त्र्यादय उदतिष्ठन् । अत्र मानमाह—**तस्मादिति** । यस्मादादित्यजन्मनिमित्ता भूतकामोत्पत्तिस्तस्मादद्यत्वेऽपि तस्याऽऽदित्यस्योदयं प्रति प्रत्यायनं प्रत्यस्तगमनं च प्रति घोषाः । आदित्याद्युक्तार्थम् ॥ ३ ॥

एतदुपासनफलमाह—

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेन॰ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥**

**इति तृतीयाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥**

---

**इति च्छान्दोग्योपनिषद्ब्राह्मणे तृतीयोऽध्यायः ॥ ३ ॥**

---

**स य एतमिति ।** स यः कश्चिदेतमादित्यमेवं यथोक्तमहिमानं विद्वाञ्जानन्नादित्यं ब्रह्मेत्युपास्ते, एनमुपासकं साधवः शोभना अनिषिद्धाः शब्दा आ च गच्छेयुरागच्छेयुश्चेति तदभ्याशो ह क्षिप्रमेव । किं च ते घोषा उप च निम्रेडेरन्नुपसुखयेयुश्च सुखं च कुर्युः । एतद्दृष्टफलमदृष्टं तूक्तोपास्यप्राप्तिः । अभ्यास आदित्यब्रह्मदृष्ट्याद्यादरार्थः ॥ ४ ॥

यत्साक्षाद्रविमध्ययूपनिलयं गायत्र्यवस्थं त्रिपा-
द्ब्रह्म स्वोदरजातवेदसि गतं सर्वं जगद्यन्मयम् ।
यत्प्राप्त्यै स्वमुतायुरर्थमपि यद्रूपान्तरं मारुतं
यज्ञादीन्समुपासते श्रुतिविदस्तं नौमि सिंहाननम् ॥

इति द्वितीयाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्यव्याख्यायां मिताक्षरायां तृतीयः प्रपाठकः ॥ ३ ॥

---

( अथ चतुर्थाध्यायस्य प्रथमः खण्डः । )

---

आदित्यसूत्रावच्छेदभेदत्वात्तदुपासनानन्तरं सूत्रात्मोपासनं विधातुं तावद्दानादीनां विद्याप्राप्तिसाधनत्वप्रदर्शनार्थमाख्यायिकामारचयति—

**ॐ । जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥**

**जानश्रुतिरिति ।** जनश्रुतस्यापत्यं जानश्रुतिर्ह पुत्रस्य पौत्र इति पौत्रायणः । श्रद्धापुरःसरं देयमस्येति श्रद्धादेयः । बहु प्रभूतं दातुं शीलमस्येति बहुदायी । बहु पक्तव्यं भोजनार्थिभ्यो यस्येति बहुपाक्य आस कस्मिंश्चिद्देशे स जानश्रुतिर्ह सर्वतः सर्वासु दिक्ष्वेत्य वसन्त्येष्वित्यावसथास्तानावसथान्वसतिस्थानानि मापयांचक्रे कारितवान् । सर्वेष्वेवाऽऽवसथेषु मे ममान्नं लोका अत्स्यन्ति भक्षयन्तीत्यभिप्रायवान् ॥ १ ॥

विशिष्टान्नदानफलं दर्शयितुमाह—

**अथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिरा-**

**ततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षी-
रिति ॥ २ ॥**

**अथ हेति ।** अथैवंसति कस्मिंश्चिद्धर्मकाले निशायां रात्रौ हर्म्यतलस्थे राजनि सति हंसरूपा ऋषयो देवता वा राज्ञोऽन्नदानगुणैस्तोषिताः सन्तो हंसरूपा भूत्वा राज्ञो दर्शनगोचरे निपेतुः पतितवन्तः । तस्मिन्काले तेषां मध्ये पृष्ठगाती हंस एनमग्रपातिनं हंसं, हो हो भो भो अयि [इति] कोमलं संबोध्य, भल्लाक्ष, भल्लाक्ष, भल्लाक्षेत्यादरं पश्य पश्येति प्रदर्शयन्नभ्युवादाभ्युक्तवान् , किं जानश्रुतेः पौत्रायणस्य दिवाऽह्ना द्युलोकेन वा समं ज्योतिराततं व्याप्तं त्वं मा प्रसाङ्क्षीः प्रसञ्जनं मा कार्षीस्तेन ज्योतिषा सह संबन्धं मा कार्षीस्तज्ज्योतिस्त्वां मा प्रधाक्षीरिति । पुरुषव्यत्ययेन मा प्रधाक्षीन्मा दहतु ॥ २ ॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ
सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳसयु-
ग्वा रैक्क इति ॥ ३ ॥**

तमेवमुक्तवन्तं पृष्ठगामिनं हंसं तु ह परोऽग्रगामी हंसः प्रत्युवाच किं कम् उ अरे इति च्छेदः । अरे हंसैनं प्राणिमात्रं सन्तं राजानमधिकृत्य कं किमेतत्पूर्वोक्तवचनमात्थ कथयसि रैक्कमिव । कथंभूतं रैक्कं सयुग्वानं युगं वहतीति युग्यो बलीवर्दः सोऽस्यामस्तीति युग्वा शकटी तया सह वर्तत इति सयुग्वा तं सयुग्वानमयं व्यधिकरणो दृष्टान्तः । तथा च रैक्वमिव कथमेनमात्थेत्यर्थः ॥ ३ ॥

यो रैक्वः स कथं नु केन प्रकारेण वर्तत इति पृष्टः पुरोगामी हंसः सदृष्टान्तमाह—

**यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ
सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति
यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥**

**यथा कृतायेति ।** यथा लोके द्यूतक्रीडासाधनीभूताक्षशब्दितस्यैकभागे चत्वारोऽङ्काः संज्ञया कृतायो य एवं सन्नत्र कृतमित्युच्यते तस्मै कृतायविजिताय विजयार्थमधरेया न्यूनास्त्र्यङ्कद्व्यङ्कैकाङ्काः क्रमेण त्रेताद्वापरकलिनामानः संयन्ति संगच्छन्ते तत्रान्तर्भवन्ति न्यूनसंख्याया अधिकसंख्यायामन्तर्भूतत्वात् । यथाऽयं दृष्टान्त एवमेवैनं रैक्वं कृतायस्थानीयमभिव्याप्य सर्वं त्रेताद्यायस्थानीयं समेत्यन्तर्भवति । किं तत्सर्वं यत्किंचिल्लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति तत्सर्वं रैक्वधर्मे तत्फलेऽन्तर्भवतीत्यर्थः । न केवलं रैक्वस्यैतन्माहात्म्यं किं तु सर्वस्यापि तादृग्ज्ञानवतस्तदस्तीति जानश्रुतेरनुग्रहार्थमाह—**यस्तद्वेदेति ।** यद्वेद्यं रैक्वो वेद तद्वेद्यं योऽन्योऽपि वेद स विद्वान्मयैतदेवं रैक्ववत्कृतायस्थानीय उक्त इति यावत् । इतिशब्दो हंसवाक्यसमाप्त्यर्थः ॥ ४ ॥

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह
संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वा-
नमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क
इति ॥ ५ ॥

यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ
सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्व-
न्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य च प्रशंसारूपमु ह जानश्रुतिः पौत्रायण [उप] शुश्राव श्रुतवान्। स राजा संजिहान एव शयनं परित्यजन्नेव क्षत्तारं सारथिनं स्तुतिं कुर्वाणमुवाच, अरेऽङ्ग हे वत्स त्वं कथं सयुग्वानं रैक्वमिव मामात्थ स्तौषि, स एव स्तुत्यर्हो नाहमिति भावः। यो नु कथमित्यादि क्षत्तृराज्ञोः प्रश्नप्रतिवचने उक्तार्थे ॥५॥६॥

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तꣳ
होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्छेति ॥ ७ ॥

स राज्ञोऽभिप्रायज्ञः क्षत्ता ह ग्रामादौ रैक्कमन्विष्यान्वेषणं कृत्वा नाविदं नाज्ञासिष-मिति ब्रुवन्प्रत्येयाय प्रत्यागतवान्। तं क्षत्तारं ह राजोवाच किमरे क्षत्तर्यस्मिन्नेकान्तादौ ब्राह्मणस्य ब्रह्मविदोऽन्वेषणाऽनुमार्गणं भवति तत्रैनं रैकं तमर्च्छ ऋच्छ गच्छान्वे-षणं कुरु ॥ ७ ॥

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोप-
विवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा
रैक्क इत्यहꣳ ह्यरा३ इति ह प्रतिजज्ञे स ह
क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥

इति चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

एवमुक्तः स क्षत्ताऽन्विष्यंस्तं विजने देशे शकटस्य गन्त्र्या अधस्तात्पामानं खर्जूं कष-माणं कण्डूयमानं दृष्ट्वोपोपविवेशोप समीप उपविष्टवान्। उपविश्य तं रैकं हाभ्युवादोक्तवान्। किं नु वितर्के हे भगवो भगवंस्त्वं सयुग्वा रैकेत्युक्तोऽहं ह्येव अरा३इति प्लुतिरनादरार्था। अरेऽहमेवेति ह प्रतिजज्ञे प्रतिज्ञां कृतवान्रैकः। स क्षत्ता हाविदं विज्ञातवान्रैक्वं गार्ह-स्थ्यार्थिनमित्यब्रुवन्प्रत्येयाय प्रत्यागत इत्यर्थः ॥ ८ ॥

इति चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ चतुर्थाध्यायस्य द्वितीयः खण्डः । )

---

तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां
निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ
हाभ्युवाद ॥ १ ॥

तत्तस्मिन्क्षत्तृवचने श्रुते सति उ एव हि जानश्रुतिः पौत्रायणो गवां षट्शतानि निष्कं कण्ठ्यहारमश्वतरीरथमश्वतरीभ्यां युक्तं रथं तदेतद्धनमादाय गृहीत्वा प्रतिचक्रमे रैक्कं प्रति गतवान् । गत्वा च तं रैक्वं हाभ्युवादाभ्युक्तवान् ॥ १ ॥

रैक्केमानि षट्शतानि गवामयं निष्कोऽयम-
श्वतरीरथो नु म एतां भगवो देवताꣳशाधि
यां देवतामुपास्स इति ॥ २ ॥

किं हे रैक्केमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथ आहृतं म इति कर्मणि षष्ठी । मामेतानुशाधि यां देवतां त्वमुपास्से तद्देवतोपासनेन मां शिक्षयेति यावत् ॥ २ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह
गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौ-
त्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहि-
तरं तदादाय प्रतिचक्रमे ॥ ३ ॥

तमेवमुक्तवन्तं राजानमु ह परो रैक्वः प्रत्युवाच, किम्, अहेति निपातोऽनर्थकः । गोभिः सह हारेत्वा हारेण युक्तेत्वा गन्त्री हे शूद्र तवैवास्तु शुचं दुद्राव जानश्रुतिः । शुचा वा कर्त्र्या दुद्रुवे । शुचा करणभूतया वा रैक्वं प्रति दुद्राव प्राप्तवानिति । सर्वं समानमन्यत् ॥ ३ ॥

तꣳ हाभ्युवाद रैक्केदꣳसहस्रं गवामयं निष्कोऽ-
यमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्ना-
स्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥
तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः
शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति ते हैते
रैक्कपर्णा नाम महावृषेषु यत्रास्मा उवास
तस्मै होवाच ॥ ५ ॥

इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

इयं जाया जायार्थं मम दुहिताऽऽनीता । अयं च ग्रामस्त्वदर्थं मया कल्पितो यस्मिन्ग्रामे त्वमास्से तिष्ठसि एतत्सर्वं गृहीत्वा भगवो मा मामनुशाधीत्येवमुक्तो मुनिस्तस्या जायार्थमानीताया दुहितुर्विद्यादाने मुखं द्वारतामुपोद्गृह्णञ्जानन्नुवाच । आजहाराऽऽहृतवानासि यदीमा गा हे शूद्र तर्ह्यनेनैव गवादिधनेन मुखेन विद्याग्रहणद्वारेण शास्त्रोक्तोपायेनाऽऽलापयिष्यथा आलापयासि विद्यां देहीति भणसीत्यर्थः । रैक्वेण ग्रामादिकमादाय विद्योपदिष्टेत्यस्माच्छ्रुतिर्ज्ञापयति—ते हैत इति । यत्र येषु ग्रामेषूवासोषितवान्रैक्वस्तानस्मै रैक्वाय ददाविति शेषः । ते हैते राजदत्ता ग्रामा महावृषेषु महापुण्यदेशेषु रैक्वपर्णा नाम विख्यातास्तत्र स्थित्वा तस्मै राज्ञे ह विद्यामुवाच ॥ ४ ॥

इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथ चतुर्थाध्यायस्य तृतीयः खण्डः । )

---

**वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

कथं वायुर्वाव बाह्यो वायुरेव संवर्गः । कथं यदा यस्मिन्काले वा अग्निरुद्वायत्युद्वासनं प्राप्नोति शाम्यति तदाऽसौ वायुमेवाप्येति वायुस्वाभाव्यं गच्छति । यदा सूर्य इत्यादि समानम् ॥ १ ॥

**यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥**

आप उच्छुष्यन्त्युच्छोषमाप्नुवन्ति । अत्र हेतुमाह—वायुर्हीति । हि यस्माद्वायुरेवैतानग्न्याद्यान्संवृङ्क्ते ग्रसत्यतो वायुः संवर्गगुण उपास्य इत्यधिदैवतं देवतासु संवर्गदर्शनम् ॥ २ ॥

**अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥ ३ ॥**

अथानन्तरमध्यात्ममात्मानमधिकृत्य प्रवर्तमानं संवर्गदर्शनमिदमुच्यते । प्राणो वाव मुख्यः प्राण एव संवर्गः कथं स पुरुषो यदा यस्मिन्काले स्वपिति स्वापं प्राप्नोति तदा मुख्यप्राणमेव वागप्येति समानमन्यत् । कुतः प्राण एव हि यस्मादेतान्सर्वान्वागादीन्संग्रसति ॥ ३ ॥

उक्तगुणौ वायुप्राणावुपसंहरति—

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥**

**तौ वा एताविति ।** तावेतौ वै द्वौ संवर्गौ संवर्गगुणकौ। कौ । देवेष्वग्न्यादिषु वायुः संवर्गः प्राणेषु वागादिषु मुख्यः प्राणः संवर्गः ॥ ४ ॥

एतयोः स्तुत्यर्थमाख्यायिकामारचयति—

**अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥**

**अथ हेति ।** अथ संवर्गगुणकोक्त्यनन्तरं शुनकस्यापत्यं शौनकं च पुरोहितं कपेर्गोत्रापत्यं कापेयमभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं क्षत्रियमेतौ भोजनायोपविष्टौ परिविष्यमाणौ पाचकैर्भोजने दीयमानान्नौ ब्रह्मचारी ब्रह्मविदभिमानी बिभिक्षे भिक्षितवान् । अस्य ब्रह्मविन्मानितां बुद्ध्वा किमयं वक्ष्यतीति विजिज्ञासमानावस्मै ब्रह्मचारिण उ ह भिक्षां न ददतुर्न दत्तवन्तौ ॥ ५ ॥

**स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥**

ततः स ब्रह्मचारी ह उवाच । किं य एको देवो भुवनस्य भवन्त्यस्मिन्भूतानीति भुवनं भूरादिः सर्वो लोकस्तस्य गोप्ता रक्षिता चतुरोऽग्न्यादीन्वागादींश्च महात्मनो महावीर्यान्य एको देवो जगार ग्रसितवान्स क इति प्रश्नार्थः । यद्वा स कः प्रजापतिर्वायुप्राणात्मा कापेय हेऽभिप्रतारिंस्तदेवं बहुधाऽध्यात्माधिदैवाधिभूतबहुप्रकारैर्वसन्तं मर्त्या मरणधर्माणोऽविवेकिनो वा नाभिपश्यन्ति न जानन्ति। एतदज्ञानं भवतोरेवेत्याह—**यस्मा इति ।** यस्मै यदर्थमेतदन्नं संस्क्रियते तस्मै प्रजापतय एवैतदन्नं न दत्तं युवाभ्याम् ॥ ६ ॥

**तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽऽत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥ ७ ॥**

यन्मह्यं न दत्तमित्येतद्ब्रह्मचारिवचनं शौनकः कापेयः प्रतिमन्वानो मनसाऽऽलोचयंस्तं

प्रत्येयाय जगाम गत्वा च हे ब्रह्मचारिन्मर्त्या न पश्यन्तीति यं त्वमवोचस्तं वयं पश्याम इत्याह—**आत्मेति** । देवादीनामग्न्यादीनामात्मा प्रजानां च स्थावरजङ्गमानां जनिता, यद्वा प्रलयसुप्तिकाले क्रमेण वायुप्राणरूपेण च स्वात्मनि ग्रसित्वा देवादीनामग्न्यादीनां वागादीनां पुनः सर्गप्रबोधकाले वायुप्राणरूपेणैव जनितोत्पादयिता बभसो भक्षणशीलः संहर्तृशीलोऽपि हिरण्यदंष्ट्रोऽमृतदंष्ट्रो भग्नदंष्ट्रोऽनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽनसूरिरस्य प्रजापतेर्महिमानं विभूतिं महान्तममेयमाहुर्ब्रह्मविदः । यद्यस्मात्स्वयमनद्यमानोऽन्यैरभक्ष्यमाणः सन्ननन्नमग्निवागादिदेवतारूपमात्ति भक्षयति । अस्त्वेवं प्रजापतिरूपं तव किमित्यत आह—**वै वयमिति** । वैशब्दोऽनर्थकः । ब्रह्मचारिन्ना इदमिति पदच्छेदः । ब्रह्मचारिन्निदमुक्तरूपं ब्रह्म वयमा संमतादुपास्महे । यद्वा ब्रह्मचारिन्न इदमिति च्छेदः । इदं यथोक्तं नोपास्महे किं तु परमेव ब्रह्मोपास्मह इत्यर्थः । ततोऽस्य पक्वान्नस्वामित्वं स्मरन्दत्तास्मै ब्रह्मचारिणे भिक्षामित्यवोचद्भृत्यान् ॥ ७ ॥

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥**

**इति चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

---

ते तस्मै ब्रह्मचारिणे भिक्षां ददुः । एवमात्मा देवानामित्यादि संवर्गविद्यायां गुणजातमुपदिश्य गुणान्तरमुपदेष्टुमाह—**ते वा एत इति** । ते वै उक्तान्नस्य ग्रासकाः । एते सावयवोऽग्न्यादयः पञ्चान्ये सप्राणवागादिभ्यः एभ्यश्चान्ये सप्राणा वागादयः पञ्च ते सर्वे मिलित्वा **दश** सन्तस्तत्प्रसिद्धं कृतं कृतायोपलक्षितं द्यूतम् । दशसंख्यावत्त्वसामान्याद्दशाक्षरा विराडिति श्रुतेः । तेषां वागादीनां विराट्त्वसंपत्तावन्नं वै विराडिति तस्याश्चान्नत्वश्रुतेः । सर्वासु दशस्वपि दिक्ष्वन्नमेव दशकृतं दशसंख्यया कृतं संपादितमत एषा वागाद्या देवता दशसंख्यावत्त्वेन विराडन्नमुक्तकृतत्वेन वागाद्यन्नादिनी । अथ गुणान्तरमाह—**तयेति** । तयाऽन्नादिन्या विराजेदं सर्वं जगद्दृष्टम् । कृतसंख्योपलब्धं विदुषां फलमाह—**सर्वमिति** । अस्योपासकस्य सर्वं दशदिक्संबद्धं दृष्टमुपलब्धं भवति । अन्नादो दीप्ताग्निर्भवति य एवं यथोक्तप्रकारेणोपास्यतत्त्वं वेदोपास्ते । अभ्यास एतदुपासनसमाप्त्यर्थः ॥ ८ ॥

इति चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थाध्यायस्य चतुर्थः खण्डः ।

---

अन्नादत्वेन वागाद्यग्न्यात्मकमुक्तं सर्वं जगत्प्राणात्मनैकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिं विधातुं श्रद्धादेरुपासनाङ्गत्वप्रदर्शनार्थामाख्यायिकामारचयति—

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मीति ॥ १ ॥**

**सत्यकाम इति** । सत्यकामो नामतो जबालाया अपत्यं जाबालो जबालां स्वमातरमामन्त्रयांचक्रे संबोधनं कृतवान् , हे भवति स्वाध्यायग्रहणाय गुरुगेहे ब्रह्मचर्यं विवत्स्यामि वासितुमिच्छामि किं गोत्रं ममेति किंगोत्रो नु वितर्केऽहमस्मीति ॥ १ ॥

**सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥**

एवं पृष्टा सा मातैनं पुत्रमुवाच । किं नाहमेतद्वेद जानामि यद्गोत्रस्त्वमसि । कुतः । परिचर्याजातं बहु चरन्ती जातिपरिचारिणी परिचरणचित्ता यौवने यौवनकाले लज्जाधिके त्वामलभे लब्धवत्यस्मि । अतः परिचरणचित्तत्वाल्लज्जाधिक्यवशाच्च गोत्रमपृष्टवती साऽहमेतन्न वेद यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीत्येतावन्मात्रमहं जाने, यद्याचार्यः पृच्छति तर्हि सत्यं सत्यकाम एव जाबालोऽस्मीत्याचार्याय ब्रुवीथाः ॥ २ ॥

**स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥**

ततः सत्यकामो ह हारिद्रुमतोऽपत्यं गौतमं गोत्रत एत्य गत्वोवाच । किं, ब्रह्मचर्यं भगवति पूजावति त्वयि समीपे वत्स्यामि वसितुमिच्छामि । अतस्तत्सिद्ध्यर्थं भगवन्तमहमुपेयामुपगच्छेयम् ॥ ३ ॥

**तꣳ होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्य-**

**कामो नाम त्वमसीति सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥ ४ ॥**

एवमुक्तवन्तं सत्यकामं ह आचार्य उवाच किंगोत्रो नु सोम्यासीत्येवं पृष्टः स सत्यकामो ह उवाच । नाहमेतद्वेद भो भगवन्यद्गोत्रोऽहमस्मि । मातरमप्यहं गोत्रमपृच्छं पृष्टवानस्मि । सा तु माता मा मां प्रत्यब्रवीदित्युक्तार्थम् ॥ ४ ॥

**तꣳ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳ संपेदुः ॥ ५ ॥**

**इति चतुर्थाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥**

---

तमेवमुक्तवन्तं जाबालं गौतम उवाच किं नैतदुक्तं वाक्यमब्राह्मणो विशेषेण वक्तुमर्हति । एवं सत्यवदनेन ब्राह्मणत्वनिर्धारणप्रयोजनमाह—**समिधमिति** । समिधं सोम्याऽऽहराऽऽनय संस्कारार्थं त्वामुपनेष्ये यतस्त्वं सत्यब्राह्मणजातिधर्मान्नागा नापेतवानसीति । तं सत्यकाममुपनीयाध्याप्य च कृशानां क्षीणानामबलानां बलहीनानां गवां समूहाच्चतुःशता चत्वारि शतानि गा निराकृत्य पृथक्कृत्वाऽऽचार्य उवाच । किं हे सोम्य त्वमिमा गा अनु पश्चात्संव्रजानुगच्छ । आचार्यनियोगः शिष्येण सफलीकर्तव्य इत्याशयेन शिष्य आह—**ता अभीति** । ता गा अरण्यं प्रति प्रस्थापयञ्छिष्य उवाच । असहस्रेणापूर्णसहस्रेणाहं नाऽऽवर्तेय न प्रत्यागच्छेयमित्युक्तवान् , स सत्यकामो हारण्ये वर्षगणं दीर्घकालं प्रोवास प्रोषितवान् । ता गावो यदा यस्मिन्काले सहस्रं संपेदुः संपन्ना बभूवुः ॥ ५ ॥

इति चतुर्थाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथ चतुर्थाध्यायस्य पञ्चमः खण्डः । )

---

**अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥**

अथ तदैनं गाश्चारयन्तं सत्यकामं हर्षभ ऋषभं प्रविष्टा दिक्संबन्धिनी वायुदेवता तुष्टा

सती सत्यकाम३ इति प्लुत्या संबोध्याभ्युवादाभ्युक्त्वा तमसौ सत्यकाम भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ। पुरुषवचनमाह—**प्राप्ता इति**। हे सौम्य वयं सहस्रं प्राप्ताः स्मः। अतस्त्वत्प्रतिज्ञायाः पूर्णत्वान्नोऽस्मानाचार्यकुलं गृहं प्रापय ॥ १ ॥

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥**

किंचाहं ते तुभ्यं ब्रह्मणः परस्य पादं चरणं ब्रवाणि कथयानि। एवमुक्तः शिष्य आह—ब्रवीतु मे मह्यं भगवान्। इत्युक्त ऋषभस्तस्मै सत्यकामायाऽऽहोवाच प्राची दिक्कलेत्यादि। एष वै सोम्य चतुष्कलश्चत्वारः कला अवयवाः प्राच्यादिरूपा यस्य स चतुष्कलः पादश्चतुर्थो भागो ब्रह्मणः प्रकाशवान्नामाभिधानं यस्येति प्रकाशवान्नाम ॥ २ ॥

एतदुपासकस्य क्रमेण दृष्टफले आह—

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥**

**इति चतुर्थाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

**स य इति**। यः कश्चिदेतं यथोक्तमेवमुक्तरीत्या विद्वान्विजानन्ब्रह्मणश्चतुष्कलं पादं प्रकाशवानित्येतद्गुणविशिष्टमुपास्तेऽस्मिँल्लोके प्रकाशवान्प्रख्यातो भवति। तथा प्रकाशवतो देवतासंबन्धिनो लोकान्मृतः स्वञ्जयति प्राप्नोति। य एवमिति पुनरुपासनानुवादः पूर्ववत् ॥ ३ ॥

इति चतुर्थाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

( अथ चतुर्थाध्यायस्य षष्ठः खण्डः। )

---

**अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्त-**

---

१ ख. °भ्युक्तवान्वक्ष्यमाणमेवं संबोधितः शिष्यो भगव इति। २ ख. किमभ्युवादेत्यत आह।

त्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय
पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

अवशिष्टं पादत्रयं बुभुत्समानस्य ते तव सत्यकामस्य द्वितीयमग्निष्टे वक्तेत्युक्त्वा, ऋषभ उपरराम । ततः सत्यकामो ह श्वोभूते परेद्युर्नित्यकर्म कृत्वाऽऽचार्यकुलं प्रति गा अभिप्रस्थापयां चकार । ताः प्रस्थिता गा यत्र यस्मिन्देशेऽभि सायं बभूवुर्निशायामभिसंबभूवुरेकत्राभिमुख्यः संभूतास्तस्मिन्देशे गा अवरुध्यावरोधं कृत्वाऽग्निमुपसमाधाय समिद्धामं कृत्वाऽग्नेः पश्चात्पश्चिमभागे प्राङ्मुखो गवामग्नेश्चोप समीप उपविवेश ऋषभवचो ध्यायन्नुपविष्टः ॥ १ ॥

तमग्निरभ्युवाद सत्यकाम३ इति भगव इति
ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे
भगवानिति तस्मै होवाच पृथिवी कलाऽन्त-
रिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य
चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥
स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽ-
नन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यन-
न्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्च-
तुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

तं विद्यार्थिनं सत्यकाममग्निः स्वगोचरां विद्यामुपदेष्टुमभ्युवाद सत्यकामा इत्यादि समानं सुबोधम् ॥ २ ॥ ३ ॥ ४ ॥

इति चतुर्थाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथ चतुर्थाध्यायस्य सप्तमः खण्डः । )

---

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभि-
प्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्रा-
ग्निमुपसमाधाय गा उपरुध्य समिधमाधाय
पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तꣳ हꣳस उपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

हंसोऽत्राऽऽदित्य उच्यते शौक्ल्यादिसामान्यात् । समानमन्यत् ॥ १ ॥ ४ ॥

इति चतुर्थाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

(अथ चतुर्थाध्यायस्याष्टमः खण्डः ।)

---

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके

मवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वा१ँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

मद्गुर्जलकाकस्तेनात्र प्राणाख्या घ्राणदेवतोच्यतेऽप्संबन्धसाम्यात्तद्विद्योपदेशाच्चाऽऽयतनवान्नाम मनसः करणोपहृतविषयाश्रयत्वादायतनवतः सावकाशान् । शेषं सुबोधम् ॥ १ ॥ २ ॥ ॥ ३ ॥ ४ ॥

इति चतुर्थाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

( अथ चतुर्थाध्यायस्य नवमः खण्डः । )

---

प्राप हाऽऽचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ १ ॥

एवं ब्रह्मवित्सन् सत्यकाम आचार्यकुलं प्राप । तं सत्यकाममाचार्योऽभ्युवादेत्यादि समानम् ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवा१ँस्त्वेव मे कामे ब्रूयात् ॥ २ ॥

हे सोम्य त्वं ब्रह्मविदिव वै भासि प्रसन्नवदनादिलिङ्गात् । को नु वितर्के त्वा मच्छिष्यमनुशशासानुशासनं कृतवानिति साक्षेपं पृष्टः शिष्यो मनुष्येभ्योऽन्ये देवता मामनुशिष्टवत्य इति ह प्रतिजज्ञे प्रतिज्ञां कृतवान् । मया तर्हीदानीं न किंचिदस्ति तव वक्तव्यमित्याशङ्कां वारयति—भगवानिति । भगवानेव तु मे मम कामनिमित्ते कामं निमित्तीकृत्याभिलषितसिद्ध्यर्थं ब्रूयाद्विद्यां कथयेत् ॥ २ ॥

अत्र गमकमाह—

श्रुत१ँ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति तस्मै हैतदेवोवाचात्र ह न किंचन वीयायेति वीयायेति ॥३॥

इति चतुर्थाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

**श्रुतमिति** । हि यस्मान्मे मम भगवद्दृशेभ्य ऋषिभ्यः श्रुतं विद्यते किमाचार्यादेव विद्या विदिता प्राप्ता साधिष्ठं साधुत्वं प्रापति प्राप्नोतीत्येवमुक्तवते तस्मै सत्यकामायैतदेवर्षभादिभिः पृथक्पृथगुक्तषोडशकलचतुष्पाद्ब्रह्मविज्ञानमेवैकफलत्वेनैकोपास्यत्वेन च संकल्प्य समस्तफलसिद्धये समस्तब्रह्मोपास्यमित्याचार्य उवाच । एवं वृत्तं श्रुतिरस्मानाह—**अत्रेति** । अत्रर्षभाद्याचार्योपदिष्टविद्यायां न ह किंचन वीयाय विगतं किं तु संपूर्णम् । अभ्यासो विद्यासमाप्त्यर्थः ॥ ३ ॥

इति चतुर्थाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथ चतुर्थाध्यायस्य दशमः खण्डः । )

---

एवं सप्रपञ्चब्रह्मोपासनमुक्त्वा कार्यब्रह्मोपासनसमुचितं कारणब्रह्मोपासनं विधातुं पूर्ववत्तपआदेरुपासनाङ्गत्वप्रदर्शनार्थमाख्यायिकामारचयति—

**उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश वर्षाण्यग्नीन्परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयꣳस्तꣳ ह स्मैव न समावर्तयति ॥ १ ॥**

**उपकोसल इति** । उपकोसलो नामतः कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवासोषितवान् । तस्य सत्यकामस्य ह द्वादश वर्षाण्यग्नीन्परिचचाराग्नीनां परिचरणं कृतवान् । स सत्यकामो ह्यन्यानन्तेवासिनो ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयंस्तमेवोपकोसलं न समावर्तयति स्म ॥ १ ॥

**तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्वाऽग्नयः परिप्रवोचन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासांचक्रे॥२॥**

तमाचार्यं जाया पत्न्युवाच । किं तप्तः कायक्लेशं प्राप्तः शुश्रूषां विदधानो ब्रह्मचारी यतः कुशलं सम्यगग्नीन्परिचचारीत्परिचरणं कृतवान् । त्वया किमित्येवमुच्यते इत्यत आह—**मा त्वेति** । त्वा त्वामग्निभक्तमसमावर्तयन्तमग्नयो मा परिप्रवोचन्गर्हां मा कुर्युरेतदर्थं मयोच्यतेऽस्मा उपकोसलायेष्टां विद्यां प्रब्रूहीति । एवमुक्तोऽपि सत्यकामस्तस्मा उपकोसलायाप्रोच्यैव किंचिदनुक्त्वैव प्रवासांचक्रे प्रवसितवान् ॥ २ ॥

---

१ क. एतत्सतयो ब्र° ।

**स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥**

आचार्याभिप्रायानभिज्ञः स उपकोसलो ह व्याधिना मानसेन दुःखेनानशितुमनशनं कर्तुं दध्रे धृतवान्मनः। तं तूष्णीमग्न्यगारे स्थितमुपकोसलमाचार्यजायोवाच किं हे ब्रह्मचारिंस्त्वमशनं भुङ्क्ष्व किं नु कस्मान्नाश्नासीत्येवमुक्तः स उपकोसलो होवाच। किम् । अस्मिन्नकृतार्थे बहवोऽनक इमे प्रसिद्धाः कामा नानात्यया जाया मे स्यादित्यादिनानाविषयेष्वत्ययोऽतिगमनं येषां ते नानात्ययास्त एव व्याधयस्तैर्व्याधिभिः कर्तव्याप्राप्तिनिमित्तचित्तदुःखैरहं प्रतिपूर्णः परिपूर्णोऽस्म्यतो नाशिष्यामीति ॥ ३ ॥

**अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥**

अथानशनाध्यवसायानन्तरं हाग्नयः शुश्रूषया विजितास्त्रयोऽपि समूदिरे संभूयोक्तवन्तः । तप्तो ब्रह्मचारी कुशलं नोऽस्मान्पर्यचारीद्धन्त योऽयमाचार्येणोपेक्षितस्तस्मै श्रद्धालवे वयं विद्यां प्रब्रवामेत्येवं निश्चित्यास्मै तपस्विन उपकोसलायोचुरुक्तवन्तः । किं प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

**स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥**

**इति चतुर्थाध्यायस्य दशमः खण्डः ॥ १० ॥**

---

एवमुपदिष्टः स ब्रह्मचारी होवाच । किंचिज्जानाम्यहं प्राणो ब्रह्म देहेन्द्रियाद्यधिष्ठितं प्राणहेतुत्वेन प्रसिद्धत्वात् । कं च तु खं च न विजानामीति । एवमुक्तवन्तं प्रति तेऽग्नय ऊचुः । किं यद्वाव यदेव कं सुखं तदेव खमाकाश इत्येवं खेन विशेष्यमाणं कं क्षणिकाद्वैषयिकसुखान्निवर्तितं यदेव खं तदेव कमित्येवं केन विशेष्यमाणं खं भौतिकादचेतनादाकाशान्निवर्तितमिति । एवमग्न्युक्तं श्रुतिरस्मभ्यं बोधयति—**प्राणं चेति** । अस्मै ब्रह्मचारिणे प्राणं च सूत्रात्मानं कार्यभूतं तदाकाशं च तस्य प्राणस्याऽऽश्रयत्वेन संब-

न्ध्याकाशं हार्दमव्याकृताख्यमेव सुखगुणविशिष्टब्रह्मोचुरग्नयः । कार्यकारणरूपे ब्रह्मणी उक्तवन्त इत्यर्थः ॥ ५ ॥

इति चतुर्थाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथ चतुर्थाध्यायस्यैकादशः खण्डः । )

---

एवं प्रधानविद्यामुपदिश्याङ्गविद्यामुपदेष्टुमारभते—

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्न-
मादित्य इति य एष आदित्ये पुरुषो दृश्यते
सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**अथेति ।** अथ प्रथमं हैनं ब्रह्मचारिणं गार्हपत्योऽग्निः स्वविद्यामनुशशास। कथं पृथिव्यग्निरन्नमादित्य इत्येताश्चतस्रो मे तनवः । एषु य एष आदित्ये पुरुषो दृश्यते सोऽहं गार्हपत्योऽग्निरस्मि यश्चाहमस्मि स एवाऽऽदित्ये पुरुषः । एतत्पुनर्वचनं त्वग्न्यादित्ययोस्तादात्म्यमेव संबन्धो न पृथिव्यन्नयोरिव भोग्यत्वेनेति दर्शयितुम् ॥ १ ॥

एतद्विद्याया दृष्टादृष्टफलमाह—

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां
लोकी भवति सर्वमायुरेति ज्योग्जीवति
नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जा-
मोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वा-
नुपास्ते ॥ २ ॥**

**इति चतुर्थाध्यायस्यैकादशः खण्डः ॥ ११ ॥**

---

**स य इति ।** यः कश्चिदेव गार्हपत्यमेवमन्नान्नादत्वेन प्रविभक्तं विद्वानुपास्ते स उपासकः पापकृत्यां पापं कर्मापहते विनाशयति लोक्याश्रयलोकेन लोकवांश्च भवतीह लोके च सर्वं शतवर्षमप्रमितमायुरेति प्राप्नोति ज्योगुज्ज्वलं प्रख्यातो जीवति नास्योपासकस्यावराश्च ते पुरुषाश्चावरपुरुषाः संततिजाः क्षीयन्ते संतत्युच्छेदो न भवति । किं च तमुपासकं जीवन्तमस्मिँल्लोकेऽमुष्मिंश्च परलोके वयमग्नय उपभुञ्जामः पालयेम च । एतमित्युक्तानुवादः ॥ २ ॥

इति चतुर्थाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

( अथ चतुर्थाध्यायस्य द्वादशः खण्डः । )

अथ हैनमन्वाहार्यपचनोऽनुशशासाऽऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति चतुर्थाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

अथानन्तरमेनं ब्रह्मचारिणमन्वाहार्यपचनो दक्षिणाग्निरनुशशासेत्यादि समानं सुबोधम् ॥ १ ॥ २ ॥

इति चतुर्थाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

( अथ चतुर्थाध्यायस्य त्रयोदशः खण्डः । )

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति चतुर्थाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

अथ हैनमाहवनीय इत्यादि समानम् ॥ १ ॥ २ ॥

इति चतुर्थाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

( अथ चतुर्थाध्यायस्य चतुर्दशः खण्डः )

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चाऽऽचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याऽऽचार्यस्तमाचार्योऽभ्युवादोपकोसल३ इति ॥ १ ॥

एवमग्निभिः स्वां स्वां विद्यामुक्त्वा तेऽग्नयः पुनः संभूयोचुः । किं ह उपकोसल ते तवैषाऽव्यवहितोक्ताऽस्मदग्नीनां विद्याऽस्मद्विद्या हे सोम्य प्राणो ब्रह्मेत्यादिपूर्वोक्ताऽऽत्मसंबन्धिनी विद्याऽऽत्मविद्या । तथाऽपीयं विनाऽऽचार्योपदेशं न फलवतीत्युक्तत्वात्तत आह– **आचार्य इति** । आचार्यस्तु ते तवाऽऽत्मनो गतिं स्थानादिकं वक्तोपदेष्टेत्युक्त्वाऽग्नय उपरताः । ततः कालेनाऽऽजगामाऽऽगत आचार्यस्तं शिष्यमुपकोसल३प्लुत्याऽभ्युवादाभ्युक्तवान् ॥ १ ॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु माऽनुशिष्याद्भो इतीहापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

स च शिष्यो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ । तेनाऽऽचार्येण हे सोम्य ते तव ब्रह्मविद इव प्रसन्नं मुखं भाति को नु वितर्केऽनुशशासेत्युक्तः शिष्यः को नु मा मामनुशिष्यादनुशासनं कुर्याद्भो भगवंस्त्वदन्य इत्येवमिहेदानीमपेव निह्नुतेऽपनिह्नुत इव । इवशब्दाभिप्रायं स्पष्टयति–**इम इति** । इम नूनमग्नयः पूर्वमन्यादृशाः सन्त इहेदानीं त्वां दृष्ट्वेदृशा वेपमाना इव दृश्यन्त इत्येवमग्नीनुपकोसलो भीतः सन्काक्वाऽभ्युवादाभ्युक्तवानुपदेष्टृत्वेनेत्यर्थः । किं नु हे सोम्य किल ते तुभ्यमग्नयोऽवोचन् ॥ २ ॥

इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥

इति चतुर्थाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

इत्युक्तः शिष्य इदमग्निभिरुक्तमित्येवं ह प्रतिजज्ञे प्रतीकद्वारा निवेदितवान् । एवं लब्धावसर आचार्य आह—लोकान्पृथिव्यादीन्वावैव किल हे सोम्य ते तवाग्नयोऽवोचन् । अहं तु पुनस्ते तुभ्यं तदुक्तमेव ब्रह्म स्थानगुणवैशिष्ट्येन वक्ष्यामीति । तेन किं स्यादित्यपेक्षायामाह—**यथेति** । यथा लोके पुष्करपलाशे पद्मपत्र आपो न श्लिष्यन्ते न संबध्यन्त एव मेवंविदि वक्ष्यमाणब्रह्मविदि पापं कर्म न श्लिष्यते । तर्हि ब्रवीतु मे मह्यं भगवानित्युक्त आचार्यस्तस्मा उपकोसलायाऽऽह विद्यामुवाच ॥ ३ ॥

इति चतुर्थाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

( अथ चतुर्थाध्यायस्य पञ्चदशः खण्डः । )

---

**य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥**

कथं यः सुखाकाशत्वेनोक्तोऽग्निभिः स एवैषोऽक्षिणि पुरुष ईश्वर एव निवृत्तचक्षुर्भिर्दृश्यत एष एव सर्वप्राणिनामात्मेत्याचार्य उवाच । अस्य छायाद्यात्मत्वं व्यावर्तयति—**एतदिति** । एतदुक्तमात्मतत्वममृतमविनाश्यत एवाभयमत एवैतद्ब्रह्म बृहत्तममेतेषां च गुणानां छायात्मन्यसंभवात् । किं च तत्तत्र लोके यद्यपि किं च तस्मिन्नक्षिणि सर्पिर्घृतं वोदकं सिञ्चति क्षिपति तत्सर्वं वर्त्मनी एव पक्ष्मावेव गच्छति न चक्षुषा संबध्यते ॥ १ ॥

पुनरस्य छायाद्यात्मत्वव्यावर्तकानि गुणान्तराण्युपास्यत्वाय सफलान्युपदिशति—

**एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥**

**एतमिति** । एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते ब्रह्मविदः । कुतो हि यस्मादाश्रित्य सर्वाणि वामानि वननीयानि संभजनीयानि शोभनानि कर्मफलान्यभिसंयन्त्युत्पद्यन्ते । एतद्गुणफलमाह—**सर्वाणीति** । स्पष्टार्थम् ॥ २ ॥

**एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥**

तथैष उ एव वामनीः । कुत एष पुरुषो हि यस्मात्सर्वाणि वामानि पुण्यकर्मफलानि प्राणिभ्यो नयति प्रापयति । सर्वाणीति गुणफलोक्तिः स्पष्टार्था ॥ ३ ॥

**एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥**

तथैष उ एव पुरुषो भामनीर्भामानि लोकं नयतीति भामनीः । कुतः । एष पुरुषो हि यस्मात्सर्वेषु लोकेष्वादित्यादिरूपैर्भाति दीप्यते । सर्वेषु लोकेष्वित्यपि फलोक्तिः स्पष्टार्था ॥ ४ ॥

अथोक्तविद्यां स्तुवन्गतिमाह —

**अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते नाऽऽवर्तन्ते ॥ ५ ॥**

**इति चतुर्थाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥**

---

**अथेति** । अथशब्दो निरूपणीयोपक्रमार्थः । यद्यदि उ अपीति पदार्थः । अस्मिन्सुखाकाशात्मकमक्षिस्थमुक्तगुणकं ब्रह्माहमेवेत्युपासके शव्यं शवसंबन्धि कर्म कुर्वन्ति यदि वा न कुर्वन्ति तथाऽपि तेऽर्चिषमेवार्चिरभिमानिनीं देवतामेवाभिसंभवन्ति प्रतिपद्यन्ते । उक्तार्चिषः सकाशादहरहर्देवतामह्नश्चाऽऽपूर्यमाणपक्षं शुक्लपक्षदेवतामापूर्यमाणपक्षाद्यान्षण्मासान्सवितोदगुत्तरां दिशमेति गच्छति तान्षण्मासांस्तद्देवता मासेभ्यः संवत्सरं तद्देवतां संवत्सरादादित्यं प्रसिद्धम् । आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमभिसंभवन्तीति प्रत्येकं संबध्यते । तत्तत्र स्थितानेतानुपासकान्सोऽमानवो मानव्यं सृष्टौ भवो मानवो न मानवोऽमानवः पुरुषो ब्रह्म सत्यलोकस्थमेव गमयति न तु निरुपाधिकम् । एतां गतिं सफलां निगमयति—**एष इति** । एष उक्तो देवपथो देवैरर्चिरादिभिर्गमयितृत्वेनोपलक्षितो देवपथो ब्रह्मणा गन्तव्यत्वेनोपलक्षितः पन्था एतेन पथोक्तं ब्रह्म प्रतिपद्यमान उपासक इमं वर्तमानं मानवं मनुसंबन्धिनं मनोः सृष्टिलक्षणमावर्तं नाऽऽवर्तन्तेऽस्मिञ्जननमरणादिना घटीयन्त्रवत्पुनःपुनरित्यावर्तस्तं न प्रतिपद्यन्ते कल्पान्तरे त्वावर्तन्त एवेममिति विशेषणात् । द्विरुक्तिस्तु सफलकार्यब्रह्मोपासनसमुच्चितकारणब्रह्मोपासनसमाप्त्यर्था । एतच्च गतिकथनमुपासनमात्रस्य नैतस्यैवेति बोध्यम् ॥ ५ ॥

इति चतुर्थाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

( अथ चतुर्थाध्यायस्य षोडशः खण्डः । )

---

एवमुपाकानां फलप्राप्तये मार्ग उक्तस्तत्प्रसङ्गेन यज्ञस्य देवदत्तोद्देशेन द्रव्यत्यागात्मकत्वात्क्रियायाश्च क्षणभङ्गिन्या गतिमत्त्वासंभवात्कथं मार्गोपदेश इत्यपेक्षायां गतिमत्त्वसंपादनायाऽऽह—

**एष ह वै यज्ञो योऽयं पवत एष ह यन्निद॒ँ सर्वं पुनाति यदेष यन्निद॒ँ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी ॥ १ ॥**

**एष ह वा इति ।** एष ह वै श्रुतिप्रसिद्धो यज्ञः । को योऽयं पवते वाति वायुः ' स्वाहा वातेधाः ' इत्यादिश्रुतिप्रसिद्धेः क्रियात्वसामान्याच्च । किंवैष वायुः किल यन्गच्छन्निदं सर्वं जगत्पुनाति । यद्यस्मादेष यन्गच्छन्सर्वं पुनाति तस्मादेष एव यज्ञो विहितादिक्रियावादिति(?)पावनत्वसामान्यादपि वायुयज्ञयोरेकत्वम् । तस्यैवंविशिष्टस्य यज्ञस्य मन्त्रोच्चारणे व्यापृता वाक्च मनश्च यथाभूतार्थज्ञाने व्यापृतम् । [ एते ] वर्तनी मार्गौ ताभ्यां हि यज्ञस्तायमानः प्रवर्तते ॥ १ ॥

**तयोरन्यतरां मनसा स॒ँस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतरा॒ँ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति ॥ २ ॥**

**अन्यतरामेव वर्तनी॒ँ स॒ँस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञ॒ँ रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवति ॥ ३ ॥**

तयोर्वर्तन्योर्मध्येऽन्यतरां मनोलक्षणां वर्तनीं ब्रह्मा ऋत्विङ्मनसा विवेकज्ञानवता संस्करोति, होताऽध्वर्युरुद्गाता ते त्रयोऽपि वाचा सम्यग्युक्तयाऽन्यतरां वाग्लक्षणां वर्तनीं संस्कुर्वन्ति । स ब्रह्मा यत्र यस्मिन्यज्ञे प्रातरनुवाके शस्त्र उपाकृते प्रारब्धे सति तदारभ्य परिधानीयायाः शस्त्रान्तिमाया ऋचः पुरा पूर्वं यदि व्यववदति मौनं परित्यजति तदाऽन्यतरामेव वागाख्यां वर्तनीं संस्करोति । होत्रादिरन्यतरां च वर्तनीम् । ब्रह्मणाऽसंस्क्रियमाणा हीयते विनश्यति छिद्री भवति । तर्हि को दोष इत्यत आह—**स यथेति ।** यथा लोके एकः पादो यस्यासावेकपात्पुरुषो व्रजन्गच्छन्रिष्यति यथा

रथो वैकेन चक्रेण वर्तमानः प्रवर्तमानो रिष्यति विनश्यति एवमस्य यजमानस्य कुत्र्त्विग्वतः स उक्तयज्ञ एकया वाग्वर्तन्या वर्तितुमशक्नुवन्रिष्यति । तथाऽपि यजमानस्य का हानिरित्यत आह—**यज्ञमिति** । यज्ञं रिष्यन्तं विनश्यन्तमनु पश्चाद्यजमानो रिष्यति । स यजमानस्तादृशं यज्ञमिष्ट्वा पापीयान्पापकृच्च भवति ॥ २ ॥ ३ ॥

अथ तत्संस्कारे गुणमाह—

**अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥**
**स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥ ५ ॥**

**इति चतुर्थाध्यायस्य षोडशः खण्डः ॥ १६ ॥**

---

**अथ यत्रेति** आरभ्याऽऽखण्डसमाप्तेन ग्रन्थेनोक्तार्थेन ॥ ४ ॥ ५ ॥

इति चतुर्थाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

( अथ चतुर्थाध्यायस्य सप्तदशः खण्डः । )

---

एवं नित्यानुष्ठानमुक्त्वा नैमित्तिकप्रायश्चित्तविधानायोपक्रमते—

**प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाꣳ रसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥ १ ॥**

**प्रजापतिरिति** । प्रजापतिर्लोकान्वक्ष्यमाणपृथिव्यादीनभ्यतपल्लोकानुद्दिश्य ततः सारजिघृक्षया ध्यानलक्षणं तपश्चचार । तेषां तप्यमानानां लोकानां रसान्सारान्प्रावृहदुद्धृतवाञ्जग्राह । कान्रसान्कुतो जग्राहेत्यत आह—**अग्निं पृथिव्या इत्यादिना** । पृथिव्यादिभ्यः सकाशात्क्रमेणाग्न्यादीन्रसान्धृतवान् ॥ १ ॥

**स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानाꣳ रसान्प्रावृहदग्नेर्ऋचो वायोर्यजूꣳषि सामान्यादित्यात् ॥ २ ॥**

स प्रजापतिः पुनरप्येता अग्न्याद्यास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान्प्रावृहत् । कान्रसान्कुत इत्यत आह—**अग्नेर्ऋच इत्यादिना** । अग्न्यादिभ्य ऋगादिलक्षणान्रसानुद्धृतवान् ॥ २ ॥

**स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्प्रावृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥**

स प्रजापतिः पुनरप्येतां त्रयीं विद्यामभ्यतपदित्यादि समानम् । भूर्भुवः स्वरिति व्याहृतित्रयं क्रमेण ऋग्यजुःसामभ्यो जग्राहेत्यर्थः ॥ ३ ॥

यदर्थमेवं व्याहृतयः सृष्टास्तदाह—

**तद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टꣳ संदधाति ॥ ४ ॥**

तद्यदिति । तत्तत्र यज्ञे यद्यृक्तऋक्संबन्धादृग्निनिमित्तं यज्ञो रिष्येत्क्षतं प्राप्नुयात्तदा ब्रह्मा भूः स्वाहेति गार्हपत्ये जुहुयात् । ऋचामृक्संबन्धिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतमुत्पन्नं संदधातीति यत्तदृचामेव रसेन संदधाति ऋचामेव वीर्येणौजसा संदधाति प्रतिसंधत्ते ॥ ४ ॥

**अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टꣳ संदधाति ॥ ५ ॥**
**अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति ॥ ६ ॥**

अथ यदि यजुष्टो रिष्येदित्यादि समानम् ॥ ५ ॥ ६ ॥

उक्तं क्षतसंधानं सदृष्टान्तमाह—

**तद्यथा लवणेन सुवर्णꣳ संदध्यात्सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥**

---

१ ख. णान्सारानु° ।

**एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टँ संदधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥ ८ ॥**

**तद्यथेति** । तत्तत्र दृष्टान्तो यथा लोके लवणेन लवणक्षारेण सुवर्णं द्रवीभूतं संदध्यादवयवसंधानं भवेत् । सुवर्णेन रजतं स्वरसतोऽशक्यसंधानमपि संदध्यात्तथा रजतेन त्रपु इत्यादि सुबोधम् । त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा बन्धनेनैवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं क्षतं ब्रह्मा संदधाति । भेषजकृतो ह वा एष यज्ञः । रोगार्त इव पुमांश्चिकित्सकेन सुशिक्षितेनैष यज्ञो भवति । कोऽसौ यत्र यस्मिन्यज्ञ एवंविद्यथोक्त व्याहृतिहोमप्रायश्चित्तविद्ब्रह्मा ऋत्विग्भवति स यज्ञ इत्यर्थः ॥ ७ ॥ ८ ॥

**एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदँ ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद्गच्छति ॥ ९ ॥**

किंचैष ह वा उदक्प्रवण उदङ्निम्नो दक्षिणोच्छ्रयो यज्ञो भवति । उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः । यत्रैवंविद्ब्रह्मा भवति । एवंविदं ह वै ब्रह्माणमृत्विजं प्रत्येषाऽनुगाथा ब्रह्मणः स्तुतिपरा । यत आवर्तते कर्म प्रदेशादृत्विजां यज्ञः क्षतीभवंस्तत्तद्यज्ञस्य क्षतरूपं प्रतिसंदधत्प्रायश्चित्तेन गच्छति परिपालयतीत्येतत् ॥ ९ ॥

**मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानँ सर्वाँश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥**

**इति चतुर्थाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥**

---

**इति च्छान्दोग्योपनिषदि चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥**

---

मानवो ब्रह्मा मौनाचरणान्मननाद्वा ज्ञानवत्त्वादतो ब्रह्मैवैकर्त्विक्कुरून्कर्तॄन्योद्धॄन्नारूढानश्वा बडवा यथाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति

१ क. शयान° । २ क. °व वपुः अङ्गाचि° ।

तत्कृतदोषापनयनात् । यत एवंविशिष्टो ब्रह्मा विद्वांस्तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीत नानेवंविदं कदाचनेति । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ १० ॥

इति चतुर्थाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्यव्याख्यायां मिताक्षरायां
चतुर्थः प्रपाठकः ॥ ४ ॥

---

( अथ पञ्चमाध्यायस्य प्रथमः खण्डः । )

---

सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता । अथेदानीं पञ्चमाध्याये पञ्चाग्निविदो गृहस्थस्योर्ध्वरेतसां च श्रद्धालूनां विद्यान्तरशीलिनां गतिमनूद्यान्या दक्षिणा दिक्संबन्धिनी केवलकर्मिणां धूमादिलक्षणा पुनरावृत्तिरूपा तृतीया च ततः कष्टतरा संसारगतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते । प्राणः श्रेष्ठो वागादिभ्य इत्यादि बहुशोऽतीते ग्रन्थे प्राणग्रहणं कृतं स कथं श्रेष्ठो वागादिषु कथं च तस्योपासनमितीदमारभ्यते—

**ॐ । यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥**

**यो ह वै ज्येष्ठमिति ।** कश्चिज्ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणैरभ्यधिकं वेद स ज्येष्ठश्च श्रेष्ठश्च भवतीति । फलेन पुरुषं प्रलोभ्याऽऽह—प्राणो वाव ज्येष्ठश्च वयसा वागादिभ्यः । गर्भे वागादिभ्यः पूर्वं प्राणस्य लब्धवृत्तिकत्वात् । श्रेष्ठश्च गुणेनास्मिन्कार्यकरणसंघाते ॥ १ ॥

**यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ॥ २ ॥**

यो वै वसिष्ठं वसुमत्तममाच्छादयितृतमं वा यो वेद स तथैव वसिष्ठो ह भवति स्वानां ज्ञातीनाम् । कस्तर्हि वसिष्ठ इत्यत आह—वाग्वाव वसिष्ठः । वाग्मिनो हि पुरुषा वसन्त्यभिभवन्त्यन्यान्वसुमत्तमांश्चातो ह वाग्वसिष्ठः ॥ २ ॥

**यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥**

यो ह वै प्रतिष्ठां वेद स चास्मिँल्लोकेऽमुष्मिंश्च परे प्रतितिष्ठति ह । का तर्हि प्रतिष्ठेत्याह—चक्षुर्वाव प्रतिष्ठा । चक्षुषा पश्यन्समे च दुर्गे च प्रतितिष्ठति यस्मादतः प्रतिष्ठा चक्षुः ॥ ३ ॥

**यो ह वै संपदं वेद सꣳ हास्मै कामाः पद्यन्ते**
**दैवाश्च मानुषाश्च श्रोत्रं वाव संपत् ॥ ४ ॥**

यो ह वै संपदं वेद तस्मा अस्मै दैवाश्च मानुषाश्च कामाः संपद्यन्ते । का तर्हि संप-दित्याह—श्रोत्रं वाव संपत् । यस्माच्छ्रोत्रेण वेदा गृह्यन्ते तदर्थविज्ञानं च । ततः कर्माणि क्रियन्ते । ततः कामः संपद्यते । एवं कामसंपद्धेतुत्वाच्छ्रोत्रं वाव संपत् ॥ ४ ॥

**यो ह वा आयतनं वेदाऽऽयतनꣳ ह स्वानां**
**भवति मनो ह वा आयतनम् ॥ ५ ॥**

यो ह वा आयतनं वेद, आयतनं ह स्वानां भवत्याश्रयो भवतीत्यर्थः । किं तदायतन-मित्याह—मनो ह वा आयतनं तस्मिन्निन्द्रियोपहृतानां विषयाणां भोक्त्रर्थानां प्रत्ययरू-पाणां मन आयतनमाश्रयोऽतो मनो ह वा आयतनमित्युक्तम् ॥ ५ ॥

**अथ ह प्राणा अहꣳश्रेयसि व्यूदिरेऽहꣳ**
**श्रेयानस्म्यहꣳश्रेयानस्मीति ॥ ६ ॥**

अथ ह प्राणा एवं यथोक्तगुणाः सन्तोऽहं श्रेयानस्म्यहं श्रेयानस्मीत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिर उक्तवन्तः ॥ ६ ॥

**ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को**
**नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते**
**शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥**

ते ह ते हैवं विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारमेत्यो-चुरुक्तवन्तो हे भगवन्कोऽस्माकं मध्ये श्रेष्ठोऽभ्यधिको गुणैरित्येवं पृष्टवन्तः । तान्पितो-वाच ह यस्मिन्वो युष्माकं मध्य उत्क्रान्ते शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि समुत्क्रान्तप्राणवतोऽपि पापिष्ठमिवातिशयेन दृश्यते कुणपमस्पृश्यमशुचि दृश्येत स वो युष्माकं श्रेष्ठ इत्यवोचत्काक्का तद्दुःखं परिजिहीर्षन् ॥ ७ ॥

**सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्यो-**
**वाच कथमशकतर्ते मज्जीवितुमिति यथा कला**
**अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृ-**
**ण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रवि-**
**वेश ह वाक् ॥ ८ ॥**

यथोक्तेषु प्राणेषु पित्रा सा ह वागुच्चक्रामोत्क्रान्तवती चोत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्येत्येतरान्प्राणानुवाच कथं केन प्रकारेणाशकत शक्तवन्तो यूयं मदृते मां विना जीवितुं धारयितुमात्मानम् । इति ह ते होचुर्यथा कला इत्यादि । कला

मूका यथा लोका अवदन्तो वाचा जीवन्ति, कथं प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा, सर्वकरणचेष्टां कुर्वन्त इत्यर्थः । एवं वयमजीविष्मेत्यर्थः । आत्मनोऽश्रेष्ठतां प्राणेषु बुद्ध्वा प्रविवेश ह वाक्पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः । समानमन्यत् ॥ ८ ॥

चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥

श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥

मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥

चक्षुर्होच्चक्राम श्रोत्रं होच्चक्राम मनो होच्चक्रामेत्यादि । यथा बाला अमनसोऽप्ररूढमनस इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥

अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान्प्राणान्समखिदत्तꣳ हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

एवं परीक्षितेषु वागादिष्वथानन्तरं ह स मुख्यः प्राण उच्चिक्रमिषन्नुत्क्रान्तुमिच्छन्किमकरोदित्युच्यते । यथा लोके सुहयः शोभनोऽश्वः पड्वीशशङ्कून्पादबन्धनकीलान्परीक्षणायाऽऽरूढेन कशया हतः सन्संखिदेत्समुत्पाटयेत्, एवमितरान्वागादीन्प्राणान्समखिदत्समुद्धृतवांस्ते प्राणाः संचालिताः सन्तः स्वस्थाने स्थातुमनुत्सहमान

अभिसमेत्य मुख्यं प्राणं तमूचुः । हे भगवन्नेधि नः स्वामी भव यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि मा चास्माद्देहादुत्क्रमीरिति ॥ १२ ॥

**अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति ॥ १३ ॥**

**अथ हैन श्रोत्रमुवाच यदह संपदस्मि त्वं तत्संपदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ॥ १४ ॥**

अथ हैनं वागादयः प्राणस्य श्रेष्ठत्वं कार्येणाऽऽपादयन्त आहुर्बलिमिव हरन्तो राज्ञे विशः । कथम्, अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति, यदिति क्रियाविशेषणं वसिष्ठत्वगुणाऽस्मीत्यर्थः । त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन तद्वसिष्ठोऽसि तद्गुणस्त्वमित्यर्थः । अथवा तच्छब्दोऽपि क्रियाविशेषणमेव । त्वत्कृतस्त्वदीयोऽसौ वसिष्ठत्वगुणोऽज्ञानान्ममेति मयाऽभिमत इत्येतत् । तथोत्तरेषु योज्यं चक्षुःश्रोत्रमनस्सु ॥१३॥१४॥

**न वै वाचो न चक्षूषि न श्रोत्राणि न मनासीत्याचक्षते प्राणा इत्येवाऽऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १५ ॥**

**इति पञ्चमाध्यायस्य प्रथमः खण्डः ॥ १ ॥**

---

श्रुतेरिदं वचो युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं यस्मान्न वै लोके वाचो न चक्षूंषि न श्रोत्राणि न मनांसीति वागादीनि करणान्याचक्षते लौकिकाः पण्डिताः । किंतु प्राणा इत्येवाऽऽचक्षते कथयन्ति हि यस्मात् । अतः प्राण एवैतानि सर्वाणि वागादीनि करणानि भवन्ति, अतस्तेषां प्राणपारतन्त्र्यं सिद्धमित्यर्थः ॥ १५ ॥

इति पञ्चमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ पञ्चमाध्यायस्य द्वितीयः खण्डः । )

---

वागादीनां स्वामी श्रैष्ठ्यादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यामुपदिश्य तदङ्गरूपान्नवासोदृष्टिविधानायोपक्रमते—

**स होवाच किं मेऽन्नं भविष्यतीति यत्किंचिदिदमा श्वभ्य आ शकुनिभ्य इति होचुस्तद्वा**

**एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किंचनानन्नं भवतीति ॥ १ ॥**

**स होवाचेति** । स मुख्यः प्राणो होवाच । किं मेऽन्नं भविष्यतीति । उक्ताः प्राणा [ वागादय ] आहुः—**यत्किंचिदिति** । आ श्वभ्यः श्वभिः सहाऽऽ शकुनिभ्यः पक्षिभिः सह यत्किंचित्प्राणिनामन्नजातं तत्तवान्नमिति वागादय ऊचुः । सर्वान्ने प्राणान्नदृष्टिः कार्येति भावः । एतदेव श्रुतिः स्वमुखेनैवाऽऽह—**तद्वा इति** । तद्वै प्रसिद्धमेतदद्यमानमन्नमेतस्य प्राणस्यैव तेनैवाद्यमानत्वात् । अनशब्दप्रयोगाभिप्रायमाह—**अनो हेति** । सर्वान्नानामत्तुः प्राणस्यानो ह वै प्रत्यक्षं साक्षादन चेष्टायामिति धातुप्रसिद्धं नामाभिधानं सर्वप्रकारचेष्टासु व्याप्तिप्रदर्शनार्थमुक्तमित्यर्थः । एवंविदः फलमाह—**न हेति** । एवंविदि यथोक्तः प्राणोऽहं सर्वभूतस्थः सर्वान्नात्तेत्येवंविदि किंचन किंचिदप्यनन्नं न ह वै नैव भवति किंत्वस्य सर्वमन्नमेव भवत्याधिदैविकरूपेण प्राणभूतत्वादित्यर्थः ॥ १ ॥

अथाऽऽख्यायिकामाश्रित्याप्सु वासोदृष्टिं विदधाति—

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

**स हेति** । स ह प्राण उवाच । किं मे मम वासो भविष्यतीत्युक्ता वागादय आप इति होक्तवन्तः । शुद्ध्यर्थं स्मार्ताचमनीयास्वप्सु प्राणवासोदृष्टिः कार्येत्यर्थः । अत्र गमकमाह—**तस्मादिति** । यस्मात्प्राणस्याऽऽपो वासस्तस्माद्वा अशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा एतत्कुर्वन्ति । एतत्किं पुरस्ताद्भोजनात्पूर्वमुपरिष्टाच्च भोजनादूर्ध्वं चाद्भिर्वासःस्थानीयाभिः परिदधति मुख्यप्राणपरिधानं कुर्वन्ति । वासोदृष्टिफलमाह—**लम्भुक इति** । लम्भुको लम्भनशीलो वासो हास्योपासकस्य भवति वाससो लब्धैव भवति । अनग्नो होत्तरीयवान्भवति ॥ २ ॥

उक्तोपासनस्तुतिमाह—

**तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥**

**तद्धैतदिति** । तद्धैतत्प्राणदर्शनं ह सत्यकामो नामतो जबालाया अपत्यं वैयाघ्रपद्याय व्याघ्रपदोऽपत्याय गोश्रुतये नाम्ना प्राणविद्यामुक्त्वाऽन्यदप्युवाच । यद्यप्येतत्प्राणदर्शनं

शुष्काय निर्जीवाय स्थाणवे ब्रूयात्प्राणवित्तदाऽप्यस्मिन्स्थाणौ शाखा जायेरन्नुत्पद्येरन्पलाशानि पत्राणि च प्ररोहेयुरित्यर्थः ॥ ३ ॥

यथोक्तप्राणविदो महत्त्वार्थं मन्थकर्माऽऽह—

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्या९ँ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ४ ॥**

**अथेति** । अथ प्राणनिष्पत्त्यनन्तरं यदि महज्जिगमिषेद्गन्तुमिच्छेन्महत्त्वप्राप्तिं कामयेत तस्येदं कर्म विधीयते—**अमावास्यायामिति** । अमावास्यायां दीक्षित्वा दीक्षित इव ब्रह्मचर्यपयोव्रतादिधर्मवान्भूत्वा पौर्णमास्यां रात्रौ कर्माऽऽरभमाणः सर्वौषधस्य व्रीह्यादिदशग्राम्यस्यानिषिद्धयावच्छक्यारण्यस्य धान्यस्य वितुषीकृतस्य मन्थमामपिष्टमौदुम्बरे पात्रे कंसे चमसे वा दधिमधुनोः संबन्धेनौदुम्बर्योपमन्थिन्योपमथ्याग्रतः स्थाप्य ( पयित्वा ) स्थालीपाकोक्तविधिनाऽग्नौ संप्लुताज्येन ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्याहुतिद्वयं हुत्वा तस्मिन्मन्थे संपातं[1] स्रुचाऽवलिप्तमाज्यमवनयेत्पातयेत् ॥ ४ ॥

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत्संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् ॥ ५ ॥**

वसिष्ठाय प्रतिष्ठायै संपद आयतनाय स्वाहेति प्रत्याहुति मन्थे संपातमवनयेत्तथैव श्रुतत्वात् ॥ ५ ॥

**अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिद९ँ स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः स मा ज्यैष्ठ्य९ँ श्रैष्ठ्य९ँ राज्यमाधिपत्यं गमयत्वहमेवेद९ँ सर्वमसानीति ॥ ६ ॥**

अथ होमानन्तरमग्नेरीषत्प्रतिसृप्यापसृत्याञ्जलौ मन्थमाधाय स्थापयित्वा जपति । तन्मन्त्रमाह—**अमो नामासीति** । हे मन्थ त्वममो नामासि अमशब्दवाच्यप्राणनामवानसि । कुतो हि यस्मादिदं जगदमा सह प्राणेन सहितं ते तव त्वदधीनम् । स एवंभूतो

---

१ क. °तं स्तुत्वाव° ।

मन्थो हि यस्माज्ज्येष्ठो वयसा श्रेष्ठः कर्मणा राजा दीप्तिमानधिपतिः सर्वस्याधिष्ठाय पालयिता तस्मात्समर्थः प्राणात्मा मामपि ज्यैष्ठ्यादिकमात्मनो गुणं गमयतु प्रापयतु। अहमेवेदं सर्वं जगत्प्राणवद्सानि भवानि । इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥ ६ ॥

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितु-र्वृणीमह इत्याचामति वयं देवस्य भोजनमि-त्याचामति श्रेष्ठꣳ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत्समृद्धं कर्मेति विद्यात् ॥ ७ ॥**

अथ जपकर्मानन्तरमेतया वक्ष्यमाणयर्चा पच्छः पादश इमं मन्थमाचामति भक्षयति। भक्षणसाधनं सविनियोगं मन्त्रं दर्शयति—**तत्सवितुरिति** । सवितुः सर्वस्य प्रसवितुर्देवस्य द्योतनात्मकस्य तन्मन्थरूपं भोजनम् । किंलक्षणं श्रेष्ठं प्रशस्यतमं पुनः किंलक्षणं सर्वधातमं सर्वस्य जगतो धारयितृतममेवंभूतं प्राणात्मकादित्यस्य भोजनं वयं वृणीमहे प्रार्थयेमहि । श्रियः कारणं महत्त्वं प्राप्तुं कर्मवन्तो वयं भगस्य भाग्यस्य हेतोरादित्यस्य स्वरूपं तुरं तूर्णं शीघ्रं धीमहि चिन्तयेमहीत्याचामतीति संबध्यते । एवं पादचतुष्टयेन ग्रासचतुष्टयं भक्षयित्वा कंसं कंसाकारं चमसं चमसाकारमौदुम्बरं पात्रं निर्णिज्य प्रक्षाल्य तूष्णीं पिबति, इत्याचम्य च पश्चादग्नेरग्नेः पश्चिमभागे चर्मणि कृष्णाजिनव्यवहितायां भूमौ स्थण्डिले केवलायां भूमौ वा वाचंयमो मौन्यप्रसाहो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन यथा स्यात्तथा संयतचित्तः सन् प्राक्शिराः संविशेत शयीत । स एवं सुप्तो यदि स्वप्ने स्त्रियं पश्येत्तदा समृद्धं समृद्धिहेतुरिदं कर्मेति विद्याज्जानीयात् ॥ ७ ॥

**तदेष श्लोको यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिद-र्शने तस्मिन्स्वप्ननिदर्शने ॥ ८ ॥**

**इति पञ्चमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥**

---

तस्मिन्नर्थ एष श्लोको मन्त्रोऽपि भवति । यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु पश्यति तदा तत्र कर्मणि समृद्धिं फलनिष्पत्तिं जानीयात् । तस्मिन्स्त्र्यादिस्वप्ननिदर्शने सति । द्विरभ्यासो मन्थकर्मसमाप्तिद्योतक इत्यर्थः ॥ ८ ॥

इति पञ्चमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथ पञ्चमाध्यायस्य तृतीयः खण्डः । )

एवं प्राणविद्यां तदङ्गं कर्म चोक्त्वा पञ्चाग्निविद्यां वक्तुं तस्याः साम्प्रिष्ठत्वं द्योतयितुमाख्यायिकामारचयति—

**श्वेतकेतुर्हाऽऽरुणेयः पञ्चालाना समितिमेयाय त ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाऽशिषत्पितेत्यनु हि भगव इति ॥१॥**

**श्वेतकेतुरिति ।** श्वेतकेतुर्नामतो ह्यारुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयः पञ्चालानां जनपदानां समितिं सभामेयायाऽऽजगाम । तमागतं श्वेतकेतुं ह प्रवाहणो नामतो जीवलस्यापत्यं जैवलिरुवाच । किं हे कुमार त्वा त्वां पिताऽन्वशिषदनुशिष्टवान् । इत्येवमुक्तः कुमार आह—**अनु हीति ।** अनुशिष्टोऽस्मि हे भगव इति ॥ १ ॥

एवमुक्तो राजा पृच्छति—

**वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्त ३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना ३ इति न भगव इति ॥ २ ॥**

**वेत्थेति ।** यद्यनुशिष्टोऽसि तर्हीतोऽस्माल्लोकादध्यूर्ध्वं प्रजा यत्प्रयान्ति गच्छन्ति तात्किं वेत्थ जानीष इत्येवमुक्त इतर आह न भगव इति । यद्भगवंस्त्वं पृच्छसि तदहं न जान इत्यर्थः । द्वितीयं पृच्छति—**वेत्थेति ।** परलोकं गताः प्रजा येन प्रकारेण पुनरावर्तन्ते तत्किं वेत्थ प्लुतिरुपहासार्था सर्वत्र । इतर आह न भगव इतीत्युक्तार्थम् । तृतीयं पृच्छति—**वेत्थेति ।** देवयानस्य पितृयाणस्य च पथोर्मार्गयोर्यत्र व्यावर्तना मिथो वियोगस्तत्किं वेत्थेत्येवमुक्त इतीति ॥ २ ॥

**वेत्थ यथाऽसौ लोको न संपूर्यत ३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥**

चतुर्थं पृच्छति—**वेत्थेति ।** असौ पितृलोको बहुभिर्गच्छद्भिरपि यथा येन प्रकारेण न संपूर्यते तत्कारणं किं वेत्थेत्येवमुक्त इतर आह न भगव इतीति । पञ्चमं

---

१ क. °कादध्यस्ताः प्र° ।

पृच्छति—यथा येन प्रकारेणाऽऽपो भूतान्तरसहिताः पयोघृताद्या अग्निहोत्रसाधनभूता अनन्तरमपूर्वीभूताः श्रद्धादिक्रमेण पञ्चम्यां वक्ष्यमाणरेतोरूपायामाहुतौ हुतायां सत्यां पुरुष इति वाचोऽभिधानं यासां ताः पुरुषवचसः पुरुषशब्दवाच्या भवन्ति पुरुषाख्यां लभन्ते तत्किं वेत्थेत्येवमुक्त इतर आह नैव भगव इतीति ॥ ३ ॥

राजाऽऽह—

**अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात्कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हाऽऽयस्तः पितुरर्धमेयाय तꣳ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥**

**अथेति** । अथैवमज्ञः सन्किं कस्मात्त्वमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि । यो हीमानि मत्पृष्टान्यर्थजातानि न विद्यान्न जानीयात्स कथमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि । यो हीमानि मत्पृष्टान्यर्थजातानि न विद्यान्न जानीयात्स कथमनुशिष्टोऽस्मीति ब्रुवीत । इत्येवं राजाऽऽयस्त । आयासितः प्रयासं प्रापितः श्वेतकेतुः पितुरर्धं स्थानमेयायाऽऽगतवांस्तं च पितरं होवाच । किं भगवांस्त्वं मा माननुशिष्य वाचाऽनुशासनमकृत्वैव किलानु त्वाऽशिषमन्वशिषमित्यब्रवीदुक्तवान्कथमेतत् ॥ ४ ॥

**पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषां नैकंचनाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकंचन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥५॥ स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तार्हांचकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥ ६ ॥**

यतो राजन्यबन्धू राजन्या बन्धवो यस्येति राजन्यबन्धू राजा स मा मां पञ्च पञ्चसंख्याकान्प्रश्नानप्राक्षीत्पृष्टवान् । तेषां प्रश्नानां मध्य एकंचनैकमपि प्रश्नमहं विवक्तुं विशेषेणार्थतो निर्णेतुं नाशकं न शक्तवानित्युक्तः स पिता होवाच किं यथा त्वं तदागतमात्र एवैतान्प्रश्नानवद उक्तवानसि । यथाशब्दस्तथार्थः । तथैवाहमेषां प्रश्नानां मध्ये नैकंचनैकमपि प्रश्नं वेदेत्येवं जानीहि । एतदेव व्यतिरेकमुखेण द्रढयति—**यद्यहमिति** । यद्यहमिमान्प्रश्नानवेदिष्यं विदितवानस्मि तर्हि कथं ते तुभ्यं नावक्ष्यं नोक्तवानस्मीत्येवमुक्तः स गौतमो गोत्रतो ह राज्ञो जैवलेरर्धं स्थानमेयाय गतवान् । तस्मै गौतमाय हार्हणां पूजां चकार

कृतवाञ्जैवलिः । स गौतमो ह परेद्युः प्रातःकाले सभागे समागते राज्ञ्युदेयाय । यद्वा भाजनं भागः पूजा तया सह वर्तमानः सभागो गौतमो राजानमुदेयायोद्गतवान् । तमागतं गौतमं राजा होवाच । किं हे गौतम भगवन्पूजावंस्त्वं मानुषस्य मनुष्यसंबन्धिनो वित्तस्य वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः । स एवमुक्तो गौतम उवाच । हे राजन्मानुषं वित्तं तवैव तिष्ठतु किं तु यामेव वाचं प्रश्नलक्षणां मम कुमारस्य त्वमभाषथास्तामेव वाचं मे मह्यं ब्रूह्युपादिशेत्येवमुक्तः स राजा कृच्छ्री दुःखी बभूव ॥ ६ ॥

**तꣳ ह चिरं वसेत्याज्ञापयांचकार तꣳ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥**

**इति पञ्चमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

विद्याया अतिरहस्यत्वात्तं गौतमं चिरं दीर्घकालं वसेत्येवमाज्ञापयांचकाराऽऽज्ञप्तवान् । राजा स्वापराधं मत्वा हेतुवचनेन क्षमापयतीत्याह—**तं हेति ।** तं गौतमं ह राजोवाच । किं हे गौतम सर्वविद्योऽपि सन्यथा मामवदस्तामेव वाचं मे ब्रूहीत्यज्ञानादुक्तवानसि तेन च मदीयाज्ञानेनैतज्जानीहि । किं यथेयं विद्या त्वत्त्वत्तः पुरा पूर्वं तु ब्राह्मणान्न गच्छति न गतवतीति । यस्मादेवं तस्मादु एव सर्वेषु लोकेषु क्षत्रियस्यैव क्षत्रियजातेरेवानया विद्यया शिष्यान्प्रति प्रशासनं प्रशासितृत्वमभूदित्येवं क्षमापयन्राजा तस्मै गौतमाय ह विद्यामुवाचोक्तवानित्यर्थः ॥ ७ ॥

इति पञ्चमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

( अथ पञ्चमाध्यायस्य चतुर्थः खण्डः । )

अर्थक्रममाश्रित्य तावत्पञ्चमप्रश्नस्योत्तरमाह—

**असौ वाव लोको गौतमाग्निस्तस्याऽऽदित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥**

**असौ वावेति ।** हे गौतमासौ वाव द्युलोक एवाऽऽहवनीयोऽग्निरिति चिन्तयेत् । तस्य द्युलोकाग्नेरादित्य एव समित् । समिन्धनात्समिदिति दृष्टिः कर्तव्या । सामान्यानां छान्दोग्यार्थप्रकाशिकायामस्माभिरुक्तत्वादूहितुं शक्यत्वाद्विस्तरभयाच्च नेहोच्यते । रश्मयः

किरणा धूम इति चिन्तयेत् । अहर्दिवसोऽर्चिरित्युपासीत । चन्द्रमाः प्रकाशभूतो मण्डलात्मा, अङ्गारा इति दृष्टिः कर्तव्या । नक्षत्राणि विस्फुलिङ्गा अग्निकणा इति चिन्तयेत् ॥ १ ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति ॥ २ ॥**

**इति पञ्चमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥**

---

तस्मिन्नेतस्मिन्यथोक्तलक्षणे द्युलोकाग्नौ देवा यजमानप्राणाधिदैविकस्वरूपमापन्ना अग्न्यादयः श्रद्धां श्रद्धया भावितामप्शब्देनोक्तां सूक्ष्मभावमापन्नामग्निहोत्राहुतिं जुह्वोति। तस्याः श्रद्धाहुतेः सोमो राजा चन्द्रमण्डलवर्तिवृद्धिक्षयवान्प्रकाशरूपः संभवति । तत्रायं यजमानशरीरं जायत इत्यर्थः ॥ २ ॥

इति पञ्चमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथ पञ्चमाध्यायस्य पञ्चमः खण्डः । )

---

सोमः पर्जन्याग्नौ हुतः सन्वृष्टिरूपेण परिणमत इत्याह—

**पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गाः ॥ १ ॥**
**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षꣳ संभवति ॥ २ ॥**

**इति पञ्चमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

**पर्जन्यो वावेति,** । पर्जन्यो वृष्ट्युपकरणाभिमानिनी देवताऽग्निः । वायुना समिध्यमानत्वाद्वायुः समित् । अशनिरिन्द्रखड्गः । ह्रादनयो गर्जितशब्दा देवाः पूर्वोक्ताः सोममुक्तार्थं वर्षं वर्षणं वृष्टिरूपेण परिणमते । समानमन्यत् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य पञ्चमः खण्डः ॥ ६ ॥

---

( अथ पञ्चमाध्यायस्य षष्ठः खण्डः । )

---

एवमुत्पन्ना वृष्टिरस्मिँल्लोके हुतान्नरूपेण परिणमत इत्याह—

**पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥**

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ संभवति ॥ २ ॥**

**इति पञ्चमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

**पृथिवी वावेति** । पृथिव्यादावग्न्यादिदृष्टिः कर्तव्येत्यादि पूर्ववत् । शेषं प्रसिद्धार्थम् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथ पञ्चमाध्यायस्य सप्तमः खण्डः । )

---

तदन्नं पुनः पुरुषाग्नौ हुतं सद्रेतोरूपेण परिणमत इत्याह—

**पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥**

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः संभवति ॥ २ ॥**

**इति पञ्चमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥**

---

**पुरुषो वावेति** । देवा आध्यात्मिका इति वागादयः । समानमन्यत् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

( अथ पञ्चमाध्यायस्याष्टमः खण्डः । )

---

तत्पुना रेतो योषाग्नौ हुतं सत्पुरुषाकारेण परिणमत इत्याह—

**योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥**

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ २ ॥**

**इति पञ्चमाध्यायस्याष्टमः खण्डः ॥ ८ ॥**

---

**योषा वावेति ।** यदुपमन्त्रयते स्त्रिया सहावाच्यकर्मार्थं संकेतं करोति यदन्तः करोति यद्योनावन्तर्मध्येऽवाच्यकर्म करोति । अभिनन्दास्तत्कर्मणोत्पन्नाः सुखलवाः देवा उक्ता आध्यात्मिकाः । समानमन्यत् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

( अथ पञ्चमाध्यायस्य नवमः खण्डः । )

---

एवं पञ्चाग्निविद्योपदेशेन निर्णीतं पञ्चमं प्रश्नमुपसंहरति—

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाऽथ जायते ॥ १ ॥**

**इति त्विति ।** इत्येवं तु पञ्चम्यामाहुतौ रेतोरूपायां हुतायां प्रकृता आपः पुरुषवचसः पुरुषशब्दवाच्या भवन्तीति पञ्चमः प्रश्नो व्याख्यातः । अथ प्रथमतृतीयप्रश्ननिर्णयस्योत्पत्तिपूर्वकत्वेन तदर्थमुत्पत्तिमाह—**स उल्बेति** । स गर्भोऽयं पूर्वोक्तानां पञ्चमपरिणामोपलब्धपुरुषाख्य उल्बेन जरायुणाऽऽवृतो वेष्टितो दश वा [नव वा] मासानन्तर्मातुः कुक्षौ शयित्वा यावद्वा तावत्कालेन जन्तुः समग्राङ्गो भवति तावत्कालं वाऽन्तः शयित्वाऽथ निर्गमनकर्माभिव्यक्त्यनन्तरं जायते बहिर्निर्गच्छति ॥ १ ॥

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ २ ॥**

**इति पञ्चमाध्यायस्य नवमः खण्डः ॥ ९ ॥**

---

एवं जातो यावदायुषं यावत्कर्मार्जितायुःपर्यन्तं जीवति पश्चात्तं क्षीणायुषं प्रेतं परलोकं प्रति कर्मणा दिष्टं निर्दिष्टमितो ग्रामाद्बहिः पुत्रादयोऽन्त्यकर्मनिमित्तमग्नय एवाग्न्यर्थमेव हरन्ति

---

१ ख. °नन्दजास्त° । २ क. सर्गतो वापू° ।

नयन्ति । कुतः, यत एवाग्नेः सकाशादित आगतः श्रद्धादिक्रमेण यतश्च पञ्चभ्योऽग्निभ्यः संभूत उत्पन्नो भवत्यतः स्वयोन्यग्नयापादनं युक्तमित्यर्थः ॥ २ ॥

इति पञ्चमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथ पञ्चमाध्यायस्य दशमः खण्डः । )

---

अथ तौ प्रथमतृतीयप्रश्नौ निरूपयति—

**तद्य इत्थं विदुः । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङे ति मासाꣳस्तान् ॥ १ ॥**

**मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्च- न्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इति॥ २ ॥**

**तद्य इत्थमिति** । तत्तत्र परलोकगामिनां मध्ये ये गृहस्था इत्थं यथोक्तक्रमेण पञ्चाग्निदर्शनं विदुः । ये चेमेऽगृहस्था वानप्रस्था अमुख्यसंन्यासिनश्चारण्ये श्रद्धापुरःसरं तप उपासते तपसि स्वधर्मे तात्पर्ययुक्ता भवन्ति । ते सर्वेऽर्चिषमर्चिरभिमानिनीं देवतामेवाभिसंभवन्ति प्राप्नुवन्तीत्युपकोसलविद्यायामुक्तार्थमेतत् । एष देवयानः पन्था मार्गो ब्रह्माण्डान्तर्गतः सत्यलोकान्तो निरूपितः ॥ १ । २ ॥

एवं केवलोपासनस्य तत्सहितकर्मणश्च देवयानमुक्त्वा केवलकर्मिणां पितृयाणमाह—

**अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिꣳ रात्रेरपरपक्षम- परपक्षाद्यान्षड्दक्षिणैति मासाꣳस्तान्नैते संव- त्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

**अथेति** । अथानन्तरं ग्रामे य इमे प्रसिद्धा गृहस्था इष्टापूर्ते श्रौतस्मार्ते अग्निहोत्रवाप्यादिकर्मणी दत्तं बहिर्वेद्यर्थिभ्यो द्रव्यदानम्, इतिशब्दादेवंविधमन्यदपि गुरुशुश्रूषाशरणागतरक्षणाद्युपासते तत्परा भवन्ति ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्ते तया धूमदेवतयाऽतिवाहिताः सन्त आतिवाहिकीं रात्रिदेवतां प्रतिपद्यन्ते । तथा रात्रेरपरपक्षं कृष्णपक्षदेवतां प्रतिपद्यन्ते । अपरपक्षाद्यान्षण्मासान्दक्षिणा दक्षिणां दिशं सवितेति

गच्छति तान्मासान्मासदेवताः प्रतिपद्यन्ते । नैते दक्षिणमार्गगाः संवत्सरावयवषण्माससंबद्धा अपि संवत्सरदेवतामुत्तरमार्गगा इव प्राप्नुवन्ति ॥ ३ ॥

**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥**

मासेभ्यः षण्मासदेवताभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसं प्रतिपद्यन्ते । कोऽसावित्यत आह—**एष इति** । एष प्रत्यक्षः सोमो राजा ब्राह्मणानाम् । तद्देवतानामन्नमन्नभूतं सोमं देवा इन्द्रादयो भक्षयन्ति सोमभूताः कर्मिणो देवैरुपभुज्यन्त इति यावत् ॥४॥

तथाच म्रियमाणानां दक्षिणोत्तरमार्गकथनेन संवत्सरावयवषण्मासप्राप्तिद्वारा मिथो मिलितानां नैते संवत्सरमभिप्राप्नुवन्तीति व्यावृत्तिकथनेन क्रमेण प्रथमतृतीयप्रश्नावुत्तरिताविदानीं द्वितीयप्रश्नस्योत्तरमाह—

**तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥५॥**

**तस्मिन्निति** । संपतत्यनेनास्माल्लोकादमुं लोकमिति संपातः कर्मसमूहो यावत्संपातं यावत्कर्मसमूहं तस्मिंश्चन्द्रमण्डल उषित्वा स्थित्वाऽथ तत्क्षयानन्तरमन्येन कर्मणैतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्ते । कथं—**यथेति** । यथा येन प्रकारेणेतं गतं तथैति । अत्र गमनवदागमनस्याप्यावश्यकत्वमित्येव विवक्षितं न तु मार्गैक्यमिति भावः । तमेवाध्वानमाह—**आकाशमिति** । चन्द्रमण्डले देहारम्भकीभूताभिः कर्मक्षये विलीनाभिरद्भिः परिवेष्टितः कर्म्याकाशं प्रतिपद्यत आकाशाद्वायुं वायुर्भूत्वा धूमो धूमस्वभावो न धूम एव धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

**अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥**

अभ्रं भूत्वा मेघः सेचनसमर्थो भवति । मेघो भूत्वा कर्मी प्रवर्षति वर्षधारारूपेण पततीति यावत् । ते क्षीणकर्माणोऽनुशायिन इह पृथिव्यां व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्येवंप्रकारा जायन्ते, आकाशादिवर्षणान्तेष्विव पूर्वसिद्धजातिस्थावरैः संश्लिष्यन्ते नतु स्वयमेव व्रीह्यादिस्थावरत्वं लभन्त इति यावत् । अतोऽस्माद्व्रीह्यादिसंश्लेषभावाद्वै खल्विति

खेदे, दुर्निष्प्रपतरम्। अत्रैकस्तकारो लुप्तो ज्ञेयः। अतिशयेन दुःखेन निष्प्रपत इति दुर्निष्प्रपतरं दुर्निष्क्रमणतरम्। कथं यो यो हि यः कश्चित्कदाचिदनुशायिसंश्लिष्टमन्नमत्ति। यः कश्चिदृतुकाले स्त्रीयोनौ रेतः सिञ्चति तदा तद्भूय एव तद्भाव एव रेतःसिगाकृतिरेव भवति। तथा चन्द्रमण्डलादवरोहतां व्रीह्यादिसंश्लिष्टानां तत्राऽऽध्यासिकसंबन्धाभावेन देहाद्यभावाद्विशेषज्ञानाभावेन वेदनाहीनानां द्राघीयसा कालेन देहान्तरारम्भोक्तेः[1]। आकाशादिसंश्लेषत्यागस्त्वनतिचिरेणेति गम्यत इति भावः॥ ६॥

तामेव योनिं कर्मविशेषकृतां विशेषरूपामाह—

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा॥ ७॥**

**तदिति।** तत्तत्र तेषु व्रीह्यादिषु संश्लिष्टानुशायिनां मध्ये य इह लोके पूर्वं रमणीयचरणाः शोभनाचरणाः पुण्यकर्माणस्ते रेतस्सिग्योगे सति रमणीयामेव पुण्यकर्मणामेव योनिं प्रतिपद्येरन्निति यत्तदभ्याशो ह क्षिप्रमेव। तामेव योनिं दर्शयति—**ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वेति।** अथ पुनर्य इह लोके कपूयचरणाः कुत्सिताचरणाः पापकर्माणस्ते कपूयां कुत्सितां पापयोनिमेव रेतस्सिग्योगानन्तरमापद्येरान्निति यत्तदभ्याशो ह क्षिप्रमेव। तामेव पापतारतम्यकृतां [योनिं] दर्शयति—श्वयोनिं वेत्यादिना॥७॥

एवं द्वितीयप्रश्नप्रतिवचनोक्त्या चतुर्थस्याप्यर्थात्प्रतिवचनमुक्तमपि पुनस्तस्यैव साक्षात्तदाह—

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयꣳ स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः॥ ८॥**

**अथैतयोरिति।** अथशब्दः स्थानान्तरोपक्रमार्थः। एतयोः पथोर्मध्ये कतरेणचनापि नयन्तीति शेषः। यथोक्तपथि साधनं ज्ञानं वा कर्म वा नानुतिष्ठन्तीति यावत्। तानीमानि क्षुद्राणि दंशमशकादीनि भूतान्यसकृद्वारंवारमावर्तीन्यावर्तनशीलानि भवन्ति जायस्व म्रियस्व

[1] ख. °म्भोन्तराक्तं°।

पुनःपुनरत्रैव जायन्त उत्पद्यन्ते म्रियन्ते च । अथवेश्वरः प्रेरयति त्वं पापी जायस्व म्रियस्वेत्येतज्जन्तुलक्षणं पूर्वोक्तपन्थानावपेक्ष्य संसरति तृतीयं स्थानम् । तेन क्षुद्राणां परलोकं प्रत्यागमनेन गतानामपि कर्मिणां पुनरावर्तनेन हेतुनाऽसौ स्वर्गलोको न संपूर्यते प्राणिभिर्न संपूर्णो भवतीत्यर्थः । एवमुक्तसंसारगतिप्रयोजनमाह—**तस्मादिति** । यस्मादेवमनवरतं जन्ममरणवेदनानुभवरूपदुरुत्तरसंसारगतिस्तस्मात्तां जुगुप्सेत बीभत्सेतेत्यर्थः । उक्तं पञ्चाग्निविधिं स्तौति—**तदिति** । तत्तस्मिन्पञ्चाग्निविद्यामाहात्म्यलक्षणेऽर्थ एष श्लोको मन्त्रः॥८॥

**स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाऽऽचरꣳस्तैरिति ॥ ९ ॥**

हिरण्यस्य ब्राह्मणस्वर्णस्य स्तेनो हर्ता ब्राह्मणः सन्सुरां पिबंश्च गुरोस्तल्पं गुरुदारानावसन्गच्छन्, ब्रह्महा ब्राह्मणस्य हन्ता चैते चत्वारः पतन्ति तैश्च चतुर्भिः सहाऽऽचरंश्चतुर्णामन्यतमेनापि संसर्गं कुर्वन्नपि । इतिशब्दो मन्त्रसमाप्तिद्योतकः ॥ ९ ॥

**अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥**

**इति पञ्चमाध्यायस्य दशमः खण्डः ॥ १० ॥**

---

अथ पुनर्यः कश्चिद्ध वा एवमुक्तरीत्यैतानुक्तान्पञ्चाग्नीन्वेदोपास्ते स एतैर्महापातकिभिः सहाऽऽचरन्सङ्गं कुर्वन्नपि न पाप्मना लिप्यते । अतः शुद्ध एव यस्मात्पूतः पञ्चाग्निदर्शनेन पावितोऽतः पुण्यलोकः श्रुतफलः प्राजापत्यादिलोको यस्य सोऽयं पुण्यलोको भवति । कोऽसावित्यत आह—**य एवमिति** । य एवं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद । द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥ १० ॥

इति पञ्चमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथ पञ्चमाध्यायस्यैकादशः खण्डः । )

---

दक्षिणेन पथा गच्छतामन्नभाव उक्तस्तद्देवानामन्नं तं देवा भक्षयन्तीति क्षुद्रजन्तुलक्षणा च

कष्टा संसारगतिरुक्ता तदुभयदोषपरिजिहीर्षणभावसाधनं वैश्वानरोपासनं सुखबोधाद्यर्थका-ख्यायिकापूर्वकं विधत्ते—

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरि-न्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥**

**प्राचीनशाल इति ।** प्राचीनशालो नामत उपमन्योरपत्यमौपमन्यवः । सत्ययज्ञो नामतः पौलुषस्यापत्यं पौलुषिः । इन्द्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्ल-वेयः । जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यः । बुडिलो नामतोऽश्वतराश्वस्यापत्य-माश्वतराश्विः । ते हैते पञ्चापि महाशाला महत्यः शाला गृहा येषां ते तथा महागृ-हस्था महाश्रोत्रिया महान्तः सन्तः श्रोत्रियाः श्रुताध्ययनसंपन्नाः समेत्य संभूय मीमांसां विचारणां चक्रुः कृतवन्तः । कथं को नोऽस्माकमात्मा किं ब्रह्मेति ब्रह्माभिन्नप्रत्यगात्मा क इति ॥ १ ॥

**ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽय-मारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः ॥ २ ॥**

एवं मीमांसन्तस्ते निश्चयमलभमाना हाऽऽत्मन उपदेष्टारं संपादयांचक्रुः । कथ-मुद्दालकोऽयमारुणिः संप्रतीममस्मदभिप्रेतमात्मानं वैश्वानरमध्येति स्मरतीत्यतो हे भगवन्तो वयं तमुद्दालकं हन्तेदानीमभ्यागच्छामेति समन्ताद्भावेन गच्छामेत्येवं निश्चित्य तमुद्दालक-मभ्याजग्मुर्गतवन्तः ॥ २ ॥

**स ह संपादयांचकार प्रक्ष्यन्ति मामिमे महा-शाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रति-पत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥**

तदागमनं बुद्ध्वा स आरुणिः संपादयांचकार । कथमिमे प्राचीनशालप्रभृतयो महा-शाला महाश्रोत्रिया मां वैश्वानरात्मानं प्रक्ष्यन्ति प्रश्नं करिष्यन्ति तत्पृष्टं चाहं न तेभ्यः सर्वमिव सर्वमेव प्रतिपत्स्ये प्रतिवचनं वक्तुं नोत्सहे । अतो हन्तेदानीमहमेषामन्यमुपदेष्टा-रमभ्यनुशासानि वक्ष्यामीति ॥ ३ ॥

**तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्र-तीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्याग-च्छामेति तꣳ हाभ्याजग्मुः ॥ ४ ॥**

एवं संपाद्य तान्प्रति होद्दालक उवाच । किं हे भगवन्तोऽयमश्वपतिनामतः केकयस्याऽपत्यं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति स्मरत्यतो वयं तं प्रति हन्तेदानीमभ्यागच्छामाभ्युपगच्छामेत्येवमुक्त्वा तमश्वपतिं प्रति तेऽभ्याजग्मुरभ्युपजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

तेभ्यो ह प्राप्तेभ्योऽश्वपतिः पृथक्पृगर्हाण्यर्हणानि पुरोहितादिभिः कारयांचकार कारितवान् । स राजा परेद्युः संजिहानः शयनं त्यजन्प्रातःकाल इदं धनं मत्तो गृहाणे( ह्णीते )त्युवाच । प्रत्याख्यातस्तदभिप्रायानभिज्ञ आत्मनः स इन्द्रवृत्ततां प्रतिपिपादयिषन्नाह—**न म इति** । मे मम जनपदे देशे न स्तेनः परस्वहर्ता न कदर्योऽदाता सति विभवेन मद्यपो द्विजोत्तमः सन्नानाहिताग्निः शतगुः । नाविद्वानधिकारानुरूपं विद्याविवर्जितः । न स्वैरी परदारेषु गन्ता । अतः स्वैरिणी दुष्टचारिणी कुतः । धनाल्पत्वनिमित्तं वा प्रत्याख्यानं भविष्यतीति मत्वाऽऽह—**यक्ष्यमाण इति** । हे भगवन्तोऽहं यक्ष्यमाणो यागं करिष्यमाणोऽस्मि यावच्छास्त्रोक्तं धनमेकैकस्मा ऋत्विजे दास्यामि तावद्धनं प्रत्येकं भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥

एवमुक्तास्ते ह राजानं प्रति स्वाभिप्रायमूचुः, किं, येन हैवार्थेन प्रयोजनेन पुरुषो यं प्रति चरेद्गच्छेत्तं हैवार्थं प्रयोजनं वदेत्तं चाऽऽत्मानं वैश्वानरं संप्रत्यध्येषि[1] स्मरसि अतस्तमेवाऽऽत्मानं वैश्वानरं नोऽस्मभ्यं ब्रूहि कथय ॥ ६ ॥

तान्होवाच प्रातर्वः प्रतिवक्ताऽस्मीति ते ह

१ ख. °षि सम्यग्जानासि ।

समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुप-
नीयैवैतदुवाच ॥ ७ ॥

इति पञ्चमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

तदर्थिनो वयं न धनार्थिन इत्येवमुक्तोऽनुपसन्नाय न वक्तव्यमित्यभिप्राय-स्तानुद्दालकप्रभृतीन्होवाच किं प्रातःकाले वो युष्मभ्यमहं प्रतिवक्ता प्रत्युत्तरदाताऽस्मी-त्युक्ता स्तेह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ताः परेद्युः पूर्वाह्णे राजानं प्रतिच-क्रमिरे गतवन्तः । राजा च तानुपगतान्ब्राह्मणजातिश्रेष्ठत्वादनुपनीयैवोपनयनं ...र्नि-पतनमकारयित्वैवैतद्वक्ष्यमाणं वैश्वानरात्मज्ञानमुवाचेत्यर्थः ॥ ७ ॥

इति पञ्चमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

अथ पञ्चमाध्यायस्य द्वादशः खण्डः ।

---

विद्योपदेष्टुकामो राजा तान्प्रत्येकं पृच्छति—

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमे-
व भगवो राजन्निति होवाचैष वै सुतेजा आ-
त्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव
सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

**औपमन्यवेति** । हे औपमन्यव त्वं कमात्मानं वैश्वानरमहमुपास्स इत्येवं पृष्टो दिवमेव द्युलोकमेव वैश्वानरमहमुपासे हे भगवः पूजावन्राजन्नित्यौपमन्यवो होवाच । इत्येवं शिष्योपन्य-स्तविद्याया विषयं च फलं चाऽऽह—**एष इति** । एष वै सुतेजाः शोभनतेजा वैश्वानर आत्माऽऽ-त्मनोऽवयवभूतत्वाद्यं त्वं द्युलोकात्मकमुपास्से । तस्मात्सुतेजोवैश्वानरोपासनात्तव कुल एकाहा-दावग्निष्टोमे सुतं काण्डितं लताद्रव्यमहीने च प्रसुतं सत्त्रे वाऽऽसुतं दृश्यते ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं
भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं
वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति
होवाच मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽग-
मिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

अत्सि भक्षयिष्यस्यन्नं दीप्ताग्निः सन्प्रियं पुत्रादींश्च पश्यसि । न केवलं प्राचीनशालस्यैवैतत्फलं किं त्वन्यस्याप्युपासकस्येत्याह—अत्स्यन्नमित्युक्तार्थं स्पष्टार्थम् । यथोक्तज्ञानादेव कृतकृत्यत्वशङ्कां वारयति—मूर्धा त्विति । एष तु द्युलोकाख्यात्मनो वैश्वानरस्य मूर्धा न समस्तोऽतोऽस्य समस्तबुद्ध्योपासनान्मूर्धा[२] ते तव विपरीतग्राहिणो व्यपतिष्यद्विपतितम(तोऽ)भविष्यद्यदि मां प्रति नाऽऽगमिष्यो नाऽऽगतोऽभविष्य इत्यर्थः ॥ २ ॥

इति पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

अथ पञ्चमाध्यायस्य त्रयोदशः खण्डः ।

---

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

अथानन्तरं सत्ययज्ञस्यैव प्राचीनयोग्येति नामान्तरेण संबोधनम् । आदित्यस्य विश्वरूपत्वं सर्वरूपत्वात्तस्मादादित्योपासनात्तव कुले बहु विश्वरूपं नानारूपं भोगोपकरणं दृश्यते ॥ १ ॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

किंच त्वामनु प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथो दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः । चक्षुस्त्वेतदात्मनो वैश्वानरस्य य एतदादित्यस्तस्य समस्तब्रह्मदृष्ट्योपासनादन्धोऽभविष्यदित्याद्यन्यत्समानम् ॥ २ ॥

इति पञ्चमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

१ ख. °र्धा संपूर्णो न भवति अतोऽस्य । २ ख. °ति प्राप्तो न स्या इ° ।

( अथ पञ्चमाध्यायस्य चतुर्दशः खण्डः । )

अथ होवाचेन्द्रद्युम्नं माल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयान्ति ॥ १ ॥
अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

इन्द्रद्युम्नस्यैव व्याघ्रपदो गोत्रापत्यत्वाद्वैयाघ्रपद्येति संबोधनम् । पृथङ्नानाविधानि वर्त्मानि यस्य स एवाऽऽत्मा स्वभावो यस्य वायोः स पृथग्वर्त्मात्मा तदुपासनात्त्वां पृथङ्नानादिक्का बलयो वस्त्रान्नादिलक्षणा आयन्त्यागच्छन्ति पृथङ्नानारथश्रेणयो रथपङ्क्तयोऽथानुयन्त्यनुगच्छन्ति प्राणस्त्वेष वायुरात्मनो वैश्वानरस्य न संपूर्णः । प्राण उदक्रमिष्यदुत्क्रान्तोऽभविष्यत् । समानमन्यत् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

( अथ पञ्चमाध्यायस्य पञ्चदशः खण्डः )

अथ होवाच जनꣳ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं

**वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति हो-**
**वाच संदेहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥**

**इति पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥**

---

बहुल आकाशस्य सर्वगतत्वात् । फलोक्तिः स्पष्टार्था । एष त्वाकाशो वैश्वानरात्मनः संदेहो देहमध्यभागः संदेहः संदिह्यत उपचीयत इति संदेहः शरीरं ते व्यशीर्यद्विशिर्णमभविष्यत् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥ ३ ॥

---

( अथ पञ्चमाध्यायस्य षोडशः खण्डः । )

---

**अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥१॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥**

**इति पञ्चमाध्यायस्य षोडशः खण्डः ॥ १६ ॥**

---

एष वाऽब्रूपो वैश्वानरात्मा रयिर्धनमद्भ्योऽन्नद्वारा तद्धेतुत्वात् । एष त्वव्लक्षणो वैश्वानरात्मनो वस्तिर्नाभेरधस्तादलाबुसदृशमेधानालमनेकच्छिद्रं मूत्रभाजनं बस्तिरुच्यते । बस्तिस्ते तव व्यभेत्स्याद्भिन्नोऽभविष्यत् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

( अथ पञ्चमाध्यायस्य सप्तदशः खण्डः )

---

**अथ होवाचोद्दालकमारुणिं गौतम कं त्वमा-**
**त्मानमुपास्स इति पृथिवीमेव भगवो राज-**

न्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥
अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

पादौ त्वेतौ पृथिवीलक्षणौ वैश्वानरात्मा न संपूर्णस्ते तव पादौ व्यम्लास्येतां विम्लानौ शिथिलीभूतावभविष्यतामित्यर्थः ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

( अथ पञ्चमाध्यायस्याष्टादशः खण्डः । )

---

तेषां सामस्त्येन वैश्वानरविद्यां वक्तुकामस्तदीयमिथ्यात्मानमनुवदति —

तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

**तान् होवाचेति** । तान्ब्राह्मणान्प्रति राजोवाच । किं वै खल्विति तेषां मिथ्याज्ञानत्वप्रसिद्धिस्मरणार्थौ । एते यूयमपृथक्सन्तामिमं वैश्वानरं पृथगिव पृथगेव विद्वांसो ज्ञानवन्तोऽन्नमत्थ भक्षयथेत्यर्थः । अथ प्रधानविद्यामुपदिशति–**यस्त्वेतमिति** । यस्त्वेतं सर्वात्मकमेवं यथोक्तद्युमूर्धादिविशिष्टं प्रादेशमात्रं प्रादेशैर्द्युमूर्धादिभिरध्यात्मं प्रत्यगात्मतया मीयते ज्ञायत इति प्रादेशमात्रस्तं प्रादेशमात्रमभिविमानं प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानमात्मानं वैश्वानरं सर्वात्मकत्वात् । विश्वश्चासौ नरश्च सर्वकारणत्वेन विश्वेषां वाऽयं नरः सर्वेश्वरत्वात् । विश्वे वा नरा नियम्या यस्यासौ

---

१ ख. °रात्मनो न । २ ख. °भिरन्तरात्म° । ३ क. °भिर्नाय

विश्वानरः; विश्वानर एव वैश्वानरोऽत्र प्रत्यग्ब्रह्मैव । को न आत्मा किं ब्रह्मेत्युपक्रमानुरोधात् । तं वैश्वानरं प्रत्यग्ब्रह्मोपास्ते स उपासकः सर्वेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मस्वात्मतया व्यपदिश्यमानेषु देहेन्द्रियादिष्वन्नमत्ति सर्वात्मैव सन् ॥ १ ॥

कुत इत्यतो हेत्वर्थमुपासनाप्रकारविध्यर्थं चोक्तमनुवदति—

**तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥**

**इति पञ्चमाध्यायस्याष्टादशः खण्डः ॥ १८ ॥**

---

**तस्येति** । तस्य ह वै प्रकृतस्यैवैतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्याद्युक्तार्थम् । प्रधानविद्यामुक्त्वा तदङ्गविद्यां भूमिकापूर्वकमाह—**उर इति** । एतस्य वैश्वानरस्य भोक्तुरुर एव वेदिः समानाकारत्वात् । वेदिः स्थण्डिलमग्निहोत्रानङ्गत्वाद्दर्शपूर्णमासाङ्गा हि सा । लोमानि बर्हिर्वेद्यामिवात्राऽऽस्तीर्णत्वात् । हृदयं गार्हपत्योऽग्निराग्निसमः प्रणयनहेतुत्वसामान्यात् । मनोऽन्वाहार्यपचनो दक्षिणाग्निः पचनहेतुत्वसामान्यात् । आस्यं मुखमाहवनीयोऽग्निरिति चिन्तयेत् । अन्नस्य हूयमानत्वसामान्यादित्यर्थः ॥ २ ॥

इति पञ्चमाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

( अथ पञ्चमाध्यायस्यैकोनविंशः खण्डः । )

---

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥**

तत्रोक्तन्यायेनाग्निहोत्रे संपादिते सति भोजनकाले प्रथमं यद्भक्तमोदनादि भोज्यमागच्छेत्तद्धोमीयं होतव्यद्रव्यमिति चिन्तयेत् । आहुतिसाधनत्वसामान्यात् । स भोक्ता यां प्रथमामाहुतिं जुहुयात्तामाहुतिं प्राणाय स्वाहेति मन्त्रेण मुखे जुहुयात् । होमफलमाह—**प्राण इति** । तेनाऽऽहुतिप्रक्षेपेण प्राणस्तृप्यतीत्यादि सुबोधम् ॥ १ ॥

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि**

तृप्यन्त्यां यत्किंच द्यौश्चाऽऽदित्यश्चाधितिष्ठत-
स्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशु-
भिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

**इति पञ्चमाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥**

---

दिवि तृप्यन्त्यां सत्यां यत्किंचित्प्राणिजातं द्यौश्चाऽऽदित्यश्चाधितिष्ठतोऽधिष्ठाय वशीकृत्य स्थितौ तदपि सर्वं तृप्यति । उपासनफलमाह—**तस्येति** । तस्य सर्वस्य तृप्तिमनु भुञ्जानस्तृप्यतीति तु प्रत्यक्षम् । किंच प्रजया पशुभिरन्नं च तदाद्यं चान्नाद्यं तेन तेजसा तद्गतदीप्त्या ब्रह्मवर्चसेन स्वाध्यायोत्थेन तेजसोपासकस्तृप्यतीत्यर्थः ॥ २ ॥

इति पञ्चमाध्यायस्यैकोनविंशः खण्डः ॥ १९ ॥

---

( अथ पञ्चमाध्यायस्य विंशः खण्डः )

---

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय
स्वाहेति व्यानस्तृप्यति ॥ १ ॥
व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति
चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृ-
प्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चन्द्र-
माश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं
तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मव-
र्चसेनेति ॥ २ ॥

**इति पञ्चमाध्यायस्य विंशः खण्डः ॥ २० ॥**

---

अथ यां द्वितीयाम् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य विंशः खण्डः ॥ २० ॥

---

( अथ पञ्चमाध्यायस्यैकविंशः खण्डः । )

---

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय
स्वाहेत्यपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

अथ यां तृतीयाम् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

( अथ पञ्चमाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥
समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

अथ यां चतुर्थीम् ॥ १ । २ ॥

इति पञ्चमाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

( अथ पञ्चमाध्यायस्य त्रयोविंशः खण्डः )

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाऽऽकाशश्चाभितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

---

अथ यां पञ्चमीमित्यादि समानम् ॥ १ ॥ २ ॥

इति पञ्चमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

---

( अथ पञ्चमाध्यायस्य चतुर्विंशः खण्डः । )

---

स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥

प्रसिद्धाग्निहोत्रनिन्दाद्वारा वैश्वानरविदो यथोक्तमग्निहोत्रं स्तौति—**स य इति ।** **स यः** कश्चिदिदं वैश्वानरदर्शनमविद्वांस्तन्नैयमिकमग्निहोत्रं जुहोति यथाऽङ्गारानाहुतिप्रक्षेपयोग्यानपोह्य त्यक्त्वा भस्मनि जुहुयात्तादृक्तत्तुल्यं तदग्निहोत्रं स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

किंचाथ य एतद्वैश्वानरदर्शनमेवमुक्तरीत्या विद्वान्संपादितमग्निहोत्रं जुहोति तस्य वैश्वानरात्मविज्ञानवतः सर्वेषु लोकेष्वित्याद्युक्तार्थम् ॥ २ ॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

किंच तत्तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्तो यथा लोके इषीकाया मुञ्जामध्यवर्तिनालस्य तूलमग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येतैवमेव हास्य विदुषः सर्वे पाप्मानो धर्माधर्माख्याः प्रदूयन्ते दह्येरन् । किंच य एवमुक्तरीत्याऽग्निहोत्रं जुहोति भुङ्क्ते ॥ ३ ॥

**तस्माद्ु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रय-**
**च्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति**
**तदेष श्लोकः ॥ ४ ॥**

तस्मादेवाग्निहोत्रभोजनादुर्वरितमु ह स एवंविद्यद्यपि चण्डालायोच्छिष्टं दद्यात्तथाऽप्यस्योपासकस्याऽऽत्मनि ह चैव चण्डालदेहस्थे वैश्वानर एतदन्नं हुतं स्यात् । एवमेव विद्यास्तुत्यर्थं सांपादिकमाग्निहोत्रं स्तौति—तदिति । तत्तस्मिन्नग्निहोत्रस्तुतिलक्षणेऽर्थ एष श्लोको मन्त्रोऽपि भवति ॥ ४ ॥

**यथेह क्षुधिता बाला मातरं पर्युपासत एवꣳ**
**सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमु-**
**पासत इति ॥ ५ ॥**
**इति पञ्चमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥**

---

**इति च्छान्दोग्योपनिषदि पञ्चमोऽध्यायः**
**समाप्तः ॥ ५ ॥**

---

यथेह क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते कदा नो माताऽन्नं परिवेवेष्टीत्येवं सर्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते । कदा त्वसौ भक्षयतीति । सर्वविद्भोजनस्य सर्वजगत्तृप्तिहेतुत्वात् । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ ५ ॥

मुख्यं प्राणं य(प)थाऽग्नीनपि गृहपतयः पञ्च वित्त्वा गृहस्थाः
स्वाचार्यैर्ये च वैश्वानरमखिलजगन्मूर्तिमात्मन्युपास्य ।
कार्यं ब्रह्माऽऽर्चिषान्ता यदि मखनिरता धूमतश्चन्द्रमाप्य
मृष्यते यत्पदाज्ञा जनिमरणभुजस्तं भजेन्मे नृसिंहम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्यव्याख्यायां मिताक्षरायां पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

---

( अथ षष्ठाध्यायस्य प्रथमः खण्डः । )

---

तृतीयाध्याये सर्वं खल्विदं ब्रह्म तज्जलानिति [ छा० ३ । १४ । १ ] जगतो ब्रह्मजनिलयस्थितित्वमुक्तं तत्साधयितुमव्यवहितं चैकस्मिन्ब्रह्मविदि भुक्ते सर्वं जगत्तृप्य-

---

१ ख. स्याज्ञाधर्मनिमित्तामिति विद्यामेव स्तौ° । २ ख. किंच अथ य एतद्वैश्वानरनदर्शनमेवमुक्तरीत्या विती ( वेत्ती ) त्युक्तं तच्चा° ।

तीत्युक्तं तच्चाऽऽत्मन एकत्वे सत्येवोपपद्यत इतीदमपि च साधयितुं षष्ठोऽध्यायः प्रवर्तते तत्र पितृपदेष्टृत्वेन विद्यायाः सारिष्ठत्वद्योतनार्थमाख्यायिकामारचयति—.

हरिः ॐ ।

श्वेतकेतुर्हाऽऽरुणेय आस तꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुली-नोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥

**श्वेतकेतुरिति** । श्वेतकेतुर्नामतोऽरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेय आस बभूव । तं पुत्रं ह पिताऽऽरुणिरुवाच । किं हे श्वेतकेतो गुरुं प्रति गत्वा ब्रह्मचर्यं वसाध्ययनार्थमित्यर्थः । एतदुभयं मा भूदित्यत आह—**न वा इति** । हे सोम्यास्मत्कुलीनोऽननूच्यानधीत्य ब्रह्मबन्धुरिव ब्राह्मणो मम बन्धुरिति व्यपदिशति न स्वयं ब्राह्मणवृत्तस्तद्वन्न वै नैव युक्तमिति ॥ १ ॥

स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यः ॥ २ ॥

एवं पित्रोक्तः स पुत्रो द्वादशवर्षः स्वाचार्यमुपेत्य गत्वा यावच्चतुर्विंशतिवर्षो बभूव तावत्सर्वान्वेदान्साङ्गानधीत्य महामना महद्गम्भीरं मनो यस्येति महामनाः सर्वज्येष्ठोऽहमिति मन्यमानोऽनूचानमनुवचनसमर्थमात्मानं मन्यत इत्यनूचानमानी स्तब्धोऽप्रणतस्वभाव एयाय स्वगृहान्प्रत्यागत इत्यर्थः । तमेवंभूतं पुत्रं दृष्ट्वा ह पितोवाच । किं हे श्वेतकेतो नु वितर्क कस्त उपाध्यायादतिशयः प्राप्तः । यद्येनातिशयेन हे सोम्य त्वमनूचानमानीतीदं कुलाननुरूपं यथा स्यात्तथा स्तब्धोऽसि । उतापि तमादेशमुपदेशं ब्रह्मलक्षणमप्राक्ष्यः पृष्टवानसि ॥ २ ॥

येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

येनाऽऽदेशेन श्रुतेनान्यदश्रुतमपि श्रुतं भवति अमतमतर्कितं मतं भवति अविज्ञातमनिश्चितं विज्ञातं भवतीति । एतदद्भुतं श्रुत्वा पृच्छति—**कथमिति** । कथं नु केन प्रकारेण हे भगवः स आदेशो भवतीति ॥ ३ ॥

इत्युक्तः पिताऽनेकदृष्टान्तपुरःसरमुपदिशति—

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञा-
तꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्ति-
केत्येव सत्यम् ॥ ४ ॥

**यथेति** । यथा लोके हे सोम्यैकेन मृत्पिण्डेन कारणभूतेन विज्ञातेन सर्वं मृन्मयं मृद्विकारजातं घटादि विज्ञातं स्यात्कार्यस्य कारणानन्यत्वादित्यर्थः । कथं तर्हि कार्य-कारणभेदप्रसिद्धिरित्यत—आह **वाचेति** । वाचाऽऽरभ्यत इति वाचारम्भणं वागाल-म्बनं विकार उच्यते परं न परमार्थतो वस्त्वस्ति । यतो नामैव नामधेयं नाममात्रं नार्थोऽ-स्तीत्यर्थः । तर्हि किमस्तीत्यत आह—**मृत्तिकेति** । मृत्तिकेत्येव मृत्तिकैव तु सत्यं वस्तुषु व्यावर्तमानेष्वनुस्यूतत्वात् ॥ ४ ॥

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं
विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नाम-
धेयं लोहमित्येव सत्यम् ॥ ५ ॥

तथा यथा सोम्यैकेन लोहमणिना स्वर्णपिण्डेन सर्वं लोहमयं कटकादि विज्ञातं स्यात् । समानमन्यत् ॥ ५ ॥

यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णा-
यसं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो
नामधेयं कृष्णायसमित्येव सत्यमेवꣳ सोम्य स
आदेशो भवतीति ॥ ६ ॥

तथा यथा सोम्यैकेनोपलक्षितेन कृष्णायसपिण्डेन सर्वं कार्ष्णायसं कृष्णायसो विका-रजातं विज्ञातं स्यात् । समानमन्यत् । एवं यथादृष्टान्तमेव हे सोम्य स यथोक्त आदेशो भवतीति ॥ ६ ॥

इत्युक्तः पुत्र आह—

न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदि-
ष्यन्कथं मे नावक्ष्यन्निति भगवाꣳस्त्वेव मे तद्ब्र-
वीत्विति तथा सोम्येति होवाच ॥ ७ ॥

इति षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

**न वा इति** । नूनं भगवन्तो मम गुरव एतद्भवदुक्तं वस्तु न वा अवेदिषुर्नैव विज्ञा-तवन्तः । कुतो हि यस्माद्यद्येतद्भवदुक्तं मद्गुरवोऽवेदिष्यन्विदितवन्तस्तर्हि कथं मे गुणव-

ते नावक्ष्यन्नोक्तवन्तोऽतो भगवांस्त्वेव भगवानेव मे मह्यं तद्वस्तु ब्रवीतु कथयत्विस्युक्त-स्तथाऽस्तु हे सोम्येति होवाचोक्तवानित्यर्थः ॥ ७ ॥

इति षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ षष्ठाध्यायस्य द्वितीयः खण्डः । )

---

एवं प्रतिज्ञातमेकविज्ञानेन सर्वविज्ञानं वक्तुमाह—

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत ॥ १ ॥**

**सदेवेति ।** हे सोम्येदं नामरूपात्मकं जगदग्रे सृष्टेः प्राक्सदेव सच्छब्दवाच्यमव्याकृ-तात्मकमीश्वरभूतमेवाऽऽसीदित्यर्थः । तस्य लक्षणमाह—**एकमेवाद्वितीयमिति ।** एतैः पदैः क्रमेण सजातीयस्वगतविजातीयभेदरहितमात्मतत्त्वमुक्तमित्यर्थः । उक्तजगत्कारणप्रती-तिदार्ढ्यार्थं तद्विपरीतार्थकमहावैनाशिकमतं दूषयितुमुपन्यस्यति—**तदिति ।** तत्तत्र प्रागुत्पत्तेर्वस्तुनिरूपणाविषये हैके वैनाशिका आहुः किमिदं जगत्प्रागुत्पत्तेरसदेव शून्य-मेवाऽऽसीदेकमेवेत्यादि पूर्ववत्तस्मादसतः शून्यात्सत्कार्यं जायताजायत । अडभावश्छान्दस इत्यर्थः ॥ १ ॥

इदं मतं दूषयति—

**कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथ-मसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

**कुत इति ।** हे सोम्यैवमसतः सज्जायत इत्येवं कुतस्तु खलु प्रमाणं स्यादिति होवाच पिता न कुतश्चित्प्रमाणादतः कथं केन प्रकारेणासतः सज्जायेतोत्पद्येत तत्र दृष्टान्ता-भावादित्यर्थः । स्वपक्षे सिद्धिमुपसंहरति—सत्त्वेव सोम्येत्याद्युक्तार्थम् ॥ २ ॥

सतोऽद्वितीयत्वं ततो जगदुत्पत्त्यादिप्रदर्शनेन समर्थयते—

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृ-जत । तस्माद्यत्र क्व च शोचति स्वेदते वा पुरु-षस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

---

१ क. °र्थकं माहायानिक° । २ क. सदेव

**तदैक्षतेति** । तत्सदाख्यं ब्रह्मैक्षतेक्षां दर्शनं कृतवत्कथं बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेण यज्जायेयेतीक्षित्वा तत्स्रष्टृत्वम् । सृष्टिपरिपूर्तये ब्रह्मणोऽद्वितीयत्वासिद्ध्यर्थं चाऽऽकाशवायुसर्जनपूर्वकं तेजोऽपञ्चीकृतमसृजत । एतत्पुनस्तेजोरूपापन्नं स्रष्टृ ब्रह्मैक्षत बहु स्यां प्रजायेयेति तद्ब्रह्मापोऽपञ्चीकृता असृजत । एवमपां तेजःकार्यत्वे लोकानुभवमनुकूलयति—**यस्मादिति** । यस्मात्तेजःकार्यभूता आपस्तस्माद्यत्र क्व च यस्मिन्कस्मिन्देशे काले वा पुरुषः शोचति वा संतप्यते स्वेदते प्रस्विद्यते तेजस एव तदध्यापोऽजायन्तोत्पद्यन्ते ॥ ३ ॥

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति**
**ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति**
**तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं**
**जायते ॥ ४ ॥**

**इति षष्ठाध्यायस्य द्वितीयः खण्डः ॥ २ ॥**

---

ता आपः पूर्ववदेवाबाकारमापन्नं ब्रह्मैक्षन्त बह्व्यः प्रभूताः स्याम भवाम प्रजायेमह्युत्पद्येमहि । इत्येवमीक्षित्वा ता आपस्तदवच्छिन्नं ब्रह्मान्नं पृथिवीलक्षणमसृजत । अत्रापि लोकप्रसिद्धिं प्रमाणयति—**तस्मादिति** । यस्मादप्कार्यमन्नं तस्मात्क्वच देशे वर्षति तत्तत्रैव भूयिष्ठं प्रभूतमन्नं भवति अतोऽद्भ्य एव तदन्नाद्यमन्नं च तदाद्यं चान्नाद्यं व्रीह्याद्यपि जायते । एवं पार्थिवान्नस्याद्भ्य उत्पत्तिकथनेन पृथिव्या एवाद्भ्यः प्रभवत्वं साध्यत इत्यर्थः ॥ ४ ॥

इति षष्ठाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथ षष्ठाध्यायस्य तृतीयः खण्डः । )

---

अथ जीवाविष्टानां भौतिकानामपि परम्परया ब्रह्मकार्यत्वं वक्तुं तान्यनुवदति—

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥**

**तेषामिति** । एषां पूर्वाध्याये गत्यागत्यादि तृतीयस्थानं चोक्तं तेषां खल्वेषां मनुष्यपश्वादिभूतानां त्रीण्येव बीजानि कारणानि भवन्ति । कानि आण्डजमण्डाज्जातमण्डजमण्डजमे-

---

१ क. तत्सृष्टि ब्रह्मसू° ।

वाऽऽण्डजं पक्ष्यादि पक्ष्यादीनां बीजम् । तथा जीवाज्जातं जीवजं जरायुजं पुरुषपश्वादीनां बीजम् । तथोद्भिज्जमुद्भिनत्तीत्युद्भिज्जं स्थावरं स्थावराणां बीजम् । स्वेदजादीनां चाण्डजेष्वेवा-न्तर्भावाद्युक्तमवधारणमित्यर्थः ॥ १ ॥

एषां शरीराणां परम्परयोक्तभूतकार्यत्वं वक्तुमाह—

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥**

**सेयमिति ।** सा प्रकृतेयमव्यवहितोक्ता स्रष्ट्देवताऽलौकिकत्वादव्याकृताख्या पूर्ववदैक्षत । कथं हन्तेदानीमहं चिन्मात्ररूपाऽनेन बुद्धिस्थपूर्वसृष्ट्यनुभूतेन जीवेन प्राणधृतिहेतुनाऽऽत्मना सद्रूपेणेमाः सृष्टास्तिस्रस्तेजोबन्नात्मिकाः सूत्रानात्मशरीरभूताप्रत्यक्षतत्त्वाद्देवता सूर्यप्रतिबिम्बवदनुप्रविश्य संसृज्य तद्देहाभिमानवती भूत्वा नामरूपे नाम्ना रूपेण च तत्सूक्ष्मपिण्डं व्याकरवाण्यसौनामाऽयमिदंरूप इति व्याकुर्याम् ॥ २ ॥

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥**

किंच तासां तिसृणां देवतानां मध्य एकैकां देवतां त्रिवृतं त्रिवृतं गुणप्रधानभावेन त्रिरूपां त्रिरूपां करवाण्येतस्मिंस्त्रिवृत्कृतेऽपि विराट्शरीरेऽनुप्रविश्य नामरूपे व्याकरवाणीत्यैक्षतेति संबन्ध इत्यर्थः । सा देवता यथासंकल्पकार्यं कृतवतीत्याह—**सेयमिति ।** सेयं प्रकृता देवताऽनेन जीवेनाऽऽत्मनेमास्तेजआद्यास्तिस्रो देवताः प्रविश्य यथासंकल्पमेव नामरूपे व्याकरोत् ॥ ३ ॥

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥**

इति षष्ठाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

तासां च देवतानां मध्य एकैकां देवतां त्रिवृतं त्रिवृतमकरोदित्युक्तार्थम् । उक्तं त्रिवृत्करणमुदाहरणतः स्फुटीकर्तुमुपक्रमते—**यथेति ।** यथा तु खलु सोम्येमा उक्तास्तिस्रो

१ क °कासृष्टदे° । २ ख. °हंचिन्मात्र° । ३ क. °नाजन्मना । ४ ख. सूत्रभूतात्म° ।

देवता एकैका प्रत्येकं त्रिवृद्गुणप्रधानभावेन भवति । तत्त्रिवृत्करणं गदतो मे मम वचनाद्विजानीहि विस्पष्टमुदाहरणतोऽवधारयेत्यर्थः ॥ ४ ॥

इति षष्ठाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

( अथ षष्ठाध्यायस्य चतुर्थः खण्डः । )

---

तद्दर्शयति—

**यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥**

**यदिति** । यदग्नेस्त्रिवृत्कृतस्य रोहितं लोहितं रूपं तदग्नित्रिवृत्कृतस्य तेजसो रूपमिति विद्धि । तस्यैवाग्नेर्यच्छुक्लं रूपं तदपां त्रिवृत्कृतानां रूपम् । तस्यैव यत्कृष्णं रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया रूपम् । एवं विवेकात्पूर्वं यत एवाग्नावग्निबुद्धिविषयभूतमासीत्तदिदानीमग्नित्वमग्नेः सकाशादपागादपगतम् । कुतस्तस्य बुद्धिमात्रपरिकल्पितत्वादित्याह—**वाचेति** । विकारस्याग्न्यादेर्नामधेयं वाच आरम्भणं वाङ्मात्रमेव मृषैवेत्यर्थः । किं तर्हि सत्यमित्यत आह—**त्रीणीति** । रोहितादित्रीण्येव रूपाणि सत्यमित्यर्थः ॥ १ ॥

**यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥**

**यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥**

**यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥**

तथा यदादित्यस्य, यच्चन्द्रमसो, यद्विद्युतो रोहितं रूपमित्यादि समानम् ॥२॥३॥४॥

पुनस्त्रिवृत्करणमुदाहरणान्तरेण दर्शयितुमाह—

**एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदांचक्रुः ॥ ५ ॥**

**एतदिति ।** एतत्त्रिवृत्करणं ह विद्वांसो विदितवन्तः पूर्वेऽतिक्रान्तकालिका महाशाला महागृहस्था महाश्रोत्रिया आहुः स्मोक्तवन्तः । किम् । अद्येदानीं नोऽस्माकं यथोक्तज्ञानवतां कुले कश्चिदश्रुतममतमविज्ञातमित्येवं नोदाहरिष्यति न वदिष्यति सर्वस्य ज्ञातत्वादित्यर्थः । कुत इत्यत आह—ह्येभ्य इति । हि यस्मादेभ्यो रोहितादित्रिरूपेभ्य एवान्यदवशिष्टमपि सर्वं विदांचक्रुर्विदितवन्तः ॥ ५ ॥

**यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुर्यदु शुक्लमिवाभूदित्यपाꣳ रूपमिति तद्विदांचक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः ॥ ६ ॥**

कथं यदु यद्यप्यनेकरूपतया संदिह्यमाने कपोतादिरूपे रोहितमिवाभूद्गृह्यमाणमासीदिति तेजसस्तद्रूपमित्येवं विदांचक्रुः । तथा यदु शुक्लमिव गृह्यमाणमभूत्तदपां रूपं यदु कृष्णमिव गृह्यमाणमभूत्तदन्नस्य रूपमित्येवं विदांचक्रुरित्यर्थः ॥ ६ ॥

किं बहुना यत्रापि रूपादिविशेषोऽवमन्तुं न शक्यते तत्रापि त्र्यात्मकत्वमवधारितवन्त एवेत्याह—

**यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाꣳ समास इति तद्विदांचक्रुर्यथा खलु नु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥**

**इति षष्ठाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥**

---

**यदिति ।** यत् उ अविज्ञातमिति च्छेदः । यदपि द्वीपान्तरादागतं पक्ष्यादि नामरूपाभ्यामविज्ञातमिव विशेषतो गृह्यमाणमभूत्तदप्येतासामेव तिसृणां देवतानां समासः समुदाय इति विदांचक्रुरित्यर्थः । एवमाधिदैविकमाधिभौतिकं च त्रिवृत्करणमुदाहरणेन दर्शयित्वाऽऽध्यात्मिकमपि तत्तथा दर्शयितुमाह—यथेति । यथा येन प्रकारेण तु खलु हे

सोम्येमास्तेजोबन्नात्मिकास्तिस्रो देवताः पुरुषेणोपभुज्यमानाः पुरुषं शिरःपाण्यादिलक्षणं प्राप्यैकैका देवता त्रिवृत्त्रिवृद्भवति तथेदानीं तदाध्यात्मिकं त्रिवृत्करणं मे मम वचनाद्विजानीहीत्यर्थः ॥ ७ ॥

इति षष्ठाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथ षष्ठाध्यायस्य पञ्चमः खण्डः । )

---

तद्दर्शयति—

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा॰सं योऽणिष्ठस्तन्मनः ॥ १ ॥**

**अन्नमिति** । अन्नं प्रसिद्धमशितं भुक्तं जाठराग्निना पच्यमानं त्रिधा विधीयते विभज्यते कथं तस्यान्नस्य त्रिधा विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलोंऽशस्तत्पुरीषं भवति । यो मध्यमोंऽशस्तद्रसादिक्रमेण परिणम्य मांसं भवति । योऽणिष्ठोऽणुतमो धातुर्हृदयं प्राप्य नाडीषु प्रविश्य संघातस्य स्थितिमुत्पादयंस्तन्मनो भवति मनसः पूर्वमेव सिद्धत्वान्मनस उपचयं करोतीति यावत् ॥ १ ॥

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥ २ ॥**

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक् ॥ ३ ॥**

तथाऽऽपः पीतास्त्रेधा तेजो घृततैलादि मज्जाऽस्थ्यन्तर्गतस्नेहः । अणिष्ठः सा वाक्तैलादिभक्षणे हि वाग्भाषणसमर्था । समान मन्यत् ॥ २ ॥ ३ ॥

उक्त मुपसंहरति—

**अन्नमय॰ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥**

**इति षष्ठाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

**अन्नमयमिति** । हि यस्मादेवमन्नाद्यणिष्ठभागगमनआदिहेतुकमतोऽन्नमयं सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति युक्तमित्यर्थः। एवं प्रत्यायितः श्वेतकेतुराह—**भूय इति।** एकस्मिन्देशे मिश्रीभूतानामन्नादीनां पृथक्पृथङ्मनआदिरूपकार्यकरत्वमितिसंदेहादतो भूय एव पुनरेव भगवांस्त्वं मा मामन्नमयमित्यादि विज्ञापयतु दृष्टान्तेनावगमयत्वित्युक्तः पिताऽऽह—**तथेति** । हे सोम्य मनआदेरन्नादिमयत्वं यथोपपद्यते तथा दृष्टान्तेनोच्यमानं शृण्विति पितोवाचेत्यर्थः ॥ ४ ॥

इति षष्ठाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

( अथ षष्ठाध्यायस्य षष्ठः खण्डः । )

---

एवं प्रतिज्ञातमाह—

**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥**

**दध्न इति** । हे सोम्य मथ्यमानस्य दध्नो योऽणिमाऽणुभावः स ऊर्ध्वः समुदीषति संभूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्घृतं भवति ॥ १ ॥

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥**

एवं यथादृष्टान्तमेव खलु हे सोम्यान्नस्याश्यमानस्य भुज्यमानस्य स वायुनाऽग्निना मथ्यमानस्य योऽणिमा स ऊर्ध्व ऊर्ध्वं हृदये समुदीषत्यागच्छति तन्मनो भवति ॥ २ ॥

**अपाꣳ सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥**

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥**

**अन्नमयꣳ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥**

**इति षष्ठाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

१ ख. °भागाभ° । २ ख. °तुका अ°।

अपां सोम्येत्यादि भूय एवेत्यतःप्राक्तनं समानम् । कथं हृदयप्रदेशे प्राणादीनां संनिधानाविशेषेऽपि मनस एवान्नरसेनोपचय इति संदेहाद्भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥ ४ ॥ ५ ॥

इति षष्ठाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथ षष्ठाध्यायस्य सप्तमः खण्डः । )

---

अन्वयव्यतिरेकाभ्यां मनसोऽन्नरसोपचितत्वं दर्शयितुमाह—

**षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽऽपोमयः प्राणो नपिबतो विच्छेत्स्यत इति ॥ १ ॥**

**षोडशकल इति ।** हे सोम्य पुरुषः प्रसिद्धः षोडशकलः षोडश कला उपयुक्तान्नजनिता मनःशक्त्यंशा यस्यासौ षोडशकलः । तस्याः शक्तेः षोडशादिनावच्छेदेन षोडशधा प्रविभज्य कलावदुपचयापचयधर्मित्वेन कलात्वेन निर्दिदीक्षितत्वात् । यद्येतदन्नकृतं मानसं वीर्यं प्रत्यक्षीकर्तुमिच्छसि तर्हि पञ्चदशाहानि दिनानि माऽशीरशनं मा कार्षीः । अपस्तु कामं यथातृप्ति पिब । यतोऽपिबत उदकपानमकुर्वतस्तव प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते । कुतः । यस्मादापोमयोऽब्विकारः प्राण इति ॥ १ ॥

**स ह पञ्चदशाहानि नाऽऽशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥**

एवं पित्रोक्तः स श्वेतकेतुर्ह पञ्चदशाहानि नाऽऽशाशनमकृतवान् । अथानन्तरं षोडशेऽहनि हैनं पितरमुपससादोपगम्य चोवाच किं भो भगवानहं ब्रवीमीत्युक्तः पिताऽऽह । ऋचो यजूंषि सामान्यधीष्वेत्युक्तः पुत्र आह । न वै मा मां भो भगवन्नृगादीनि प्रतिभान्ति स्फुरन्ति ॥ २ ॥

**तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥**

इत्येवमुक्तवन्तं पुत्रं प्रति ह पिता तत्र सदृष्टान्तं कारणं वक्तुमुवाच, किं यथा लोके हे सोम्य महतो महत्परिमाणस्याभ्याहितस्योपचितस्याग्नेर्यद्येकोऽङ्गारः खद्योतमात्रः खद्योतपरिमाणः परिशिष्ट उर्वरितः स्यात्तदा तेनाङ्गारेण ततोऽपि खद्योतपरिमाणादीषदपि न बहु दहेदेवं यथादृष्टान्तमेव हे सोम्य ते तवान्नोपचितानां षोडशानां कलानां मध्य एका कलाऽतिशिष्टाऽवशिष्टा स्याद्वर्तते तयैकया कलयैतर्हीदानीं त्वं वेदान्नानुभवसि श्रुत्वाऽपि न प्रतिपद्यसे । अशान भुङ्क्ष्वाथानन्तरं मे ममर्गादिलक्षणं वचनं विज्ञास्यसि ॥३॥

**स हाऽऽशाथ हैनमुपससाद तꣳ ह यत्किंच**
**पप्रच्छ सर्वꣳ ह प्रतिपेदे ॥ ४ ॥**

इत्युक्तः स पुत्रो हाऽऽश भुक्तवान् । अथानन्तरं हैनं पितरमुपससाद तमुपगतं पुत्रं ह पिता यत्किंचर्गादिजातं पप्रच्छ तत्सर्वं पुत्रः प्रतिपेदे प्रतिपन्नवान् ॥ ४ ॥

**तꣳ होवाच यथा सोम्य महतोऽभ्याहितस्यै-**
**कमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपस-**
**माधाय प्राज्वलयेत्तेन ततोऽपि बहु दहेत् ॥ ५ ॥**

तं पुत्रं ह पिता तत्कारणमुवाचोक्तवान्सदृष्टान्तम् । यथा सोम्य महतोऽभ्याहितस्याग्नेरेकमङ्गारं खद्योतमात्रं परिशिष्टं स्यात्तमङ्गारं तृणैरुपसमाधायोपचित्य प्राज्वालयेद्वर्धयेत् । वर्धितेनाङ्गारेण ततोऽपि पूर्वपरिमाणादपि बहु दहेत् ॥ ५ ॥

**एवꣳ सोम्य ते षोडशानां कलानामेका कलाऽ-**
**तिशिष्टाऽभूत्साऽन्नेनोपसमाहिता प्राज्वालीत-**
**यैतर्हि वेदाननुभवस्यन्नमयꣳ हि सोम्य मन**
**आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य**
**विजज्ञाविति विजज्ञाविति ॥ ६ ॥**

**इति षष्ठाध्यायस्य सप्तमः खण्डः ॥ ७ ॥**

---

एवं यथादृष्टान्तमेव हे सोम्य ते तव षोडशानां कलानां मध्य एका कलाऽतिशिष्टाऽभूत्साऽतिशिष्टा कलाऽन्नेनोपसमाहितोपहिता प्राज्वाली प्रज्वलिता संवर्धिता । तथा वर्धितयैतर्हीदानीं वेदाननुभवस्युपलभसे । अतोऽन्नमयं हि सोम्य मन इत्याद्युक्तार्थम् । श्वेतकेतोरुपादिष्टसंपत्तिं श्रुतिर्दर्शयति—**तद्धेति** । तन्मनआदीनामन्नादिमयत्वं हास्य पितुरुक्तं श्वेतकेतुर्विजज्ञौ विज्ञातवान् । द्विरभ्यासस्त्रिवृत्करणप्रकरणसमाप्त्यर्थः ॥ ६ ॥

इति षष्ठाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

( अथ षष्ठाध्यायस्याष्टमः खण्डः । )

---

त्रिवृत्करणविषयमवान्तरप्रकरणं परिसमाप्य सद्विषयमेवानुवर्तयन्मनसो लये सुषुप्तौ जीवस्य सत्संपत्तिं वक्तुमुक्तवानित्याह—

> उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति ॥ १ ॥

**उद्दालक इति ।** उद्दालको नामतोऽरुणस्यापत्यमारुणिः श्वेतकेतुं पुत्रमुवाच । किं ह सोम्य स्वप्नान्तं स्वप्नस्यान्तोऽवसानं यस्मिन्निति स्वप्नान्तस्तं स्वप्नान्तं सुषुप्तिस्थानं सत्संपत्त्याख्यं मे मम वचनाद्विजानीहीति । कथं यत्र यस्मिन्काले पुरुषस्यैतत्स्वपिति नाम भवति तदा तस्मिन्काले हे सोम्य पुरुषः सता सच्छब्दवाच्यया प्रकृतया देवतया संपन्नः संगत एकीभूतो भवति भेदहेतोरुपाधेर्विलयादित्यर्थः । कथमेतन्नामेत्यपेक्षायां गुणयोगादित्याह—**स्वमिति ।** मनआदेर्विलीनत्वेन तत्संसर्गकृतं जीवत्वं परित्यज्य स्वं स्वकीयं स्वरूपं परमार्थसत्यमपीतो गतो भवति । तस्मादेतं सुषुप्तं स्वपितीत्येवं नामाऽऽचक्षते लौकिकाः । स्वात्मानं यस्मादपीतो भवतीत्येवं तद्गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिरवगम्यत इत्यभिप्रायः ॥ १ ॥

एवमुक्तामेव सत्संपत्तिं दृष्टान्तेन बोधयति—

> स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य मन इति ॥ २ ॥

**स यथेति ।** स दृष्टान्तो यथा लोके शकुनिः पक्षी शाकुनिकातस्य हस्तगतेन सूत्रेण बद्धः पाशतो बन्धनमोक्षार्थी दिशं दिशं प्रतिदिशं पतित्वा बन्धनादन्यत्राऽऽयतनमाश्रयं विश्रामस्थानमलब्ध्वाऽप्राप्य बन्धनमेवोपश्रयत आश्रयते । एवं यथादृष्टान्तमेव खलु हे सोम्य तत्प्रकृतमन्नोपचितं मनो मनउपलक्षितो जीवो दिशं दिशं कर्मोपदिष्ट-

सुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वाऽनुभूयान्यत्र सदाख्यात्स्वात्मन आयतनं विश्रमणस्थानमलब्ध्वा प्राणमेव सदाख्यां देवतामेवोपश्रयते न प्रसिद्धं प्राणं सत्प्रकरणात्प्राणस्य प्राणमित्यादिश्रुत्यन्तराच्चेत्यर्थः । जीवस्य परमात्माश्रितत्वे हेतुमाह—**प्राणबन्धनमिति** । हे सोम्य प्राणो बन्धनं यस्य मनसस्तन्मनः प्राणबन्धनं प्राणो बन्धनं प्राणोपलक्षितपरमात्माश्रयं मनस्तदुपलक्षितो जीव इत्यर्थः ॥ २ ॥

स्वपितिनामप्रसिद्धिद्वारेण जगतो मूलं दर्शयित्वाऽन्नाबादिलक्षणकार्यकारणपरम्परयाऽपि तद्दिदर्शयिषुराह—

**अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥**

**अशनापिपासे इति** । अशितुमिच्छाऽशना यालोपश्छान्दसः । पातुमिच्छा पिपासा ते अशनापिपासे । तयोः सतत्त्वं हे सोम्य मम वचनाद्विजानीहि । इत्युक्त्वा तावदशनातत्त्वं दर्शयति—**यत्रेति** । यत्र यस्मिन्पुरुषोऽशितुमिच्छत्यशिशिषतीत्येतन्नामा भवति । तदा पीता आप एव तदशितमन्नं नयन्ते द्रवीकृत्य रसादिभावेन परिणमयन्त इत्यर्थः । एतद्दृष्टान्तेन प्रतिपादयति—**तदिति** । तत्तस्मिन्नपामशितनेतृत्वे दृष्टान्तो यथा लोके गां नयतीति गोनायो गोपाल उच्यते । तथाऽश्वनायः पुरुषनाय इत्येवं यथादृष्टान्तम् । तत्तदा यदा पुरुषोऽशिशिषति नाम तदाऽशितं नयतीत्यशनायेत्येकवचनं छान्दसम् । एवमप आचक्षते कथयन्ति लौकिकाः । तत्रैवमपामशितनेतृत्वे सत्येतच्छरीराख्यं शुङ्गमिव शुङ्गं कार्यं वटकणिकानामिवाङ्कुररूपमुत्पतितमुत्पन्नं हे सोम्य त्वं विजानीहि किं नेदं शरीररूपं शुङ्गं कार्यममूलं मूलरहितं भविष्यति ॥ ३ ॥

इत्युक्तः श्वेतकेतुराह—

**तस्य क्व मूलꣳ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

**तस्येति** । तस्य शारीरस्य क्व मूलं स्यादित्येवं पृष्टः पिताऽऽह—**अन्यत्रान्नादिति** ।

१ क. ख. भवति ।

अन्नादन्यत्र तस्य क्व मूलं स्यादित्यनुषङ्गः । किंत्वन्नमेव रसक्रमेण मूलमिति भावः । यथा देहशुङ्गोऽन्नमूल एवमेव खलु हे सोम्यान्नेनान्नरूपेण शुङ्गेन कार्येणाऽऽपो मूलमब्लक्षणं कारणमन्नस्य शुङ्गस्यान्विच्छ प्रतिपद्यस्व । तथाऽपामप्युत्पत्त्यादिमत्वादद्भिर्हि सोम्य शुङ्गेन कार्येण तत्कारणरूपं तेजो मूलमन्विच्छ । तथा त्वं तेजसा सोम्य शुङ्गेन सद्रूपं मूलमीश्वराख्यमन्विच्छ । अतो हे सोम्येमाः स्थावरजङ्गमलक्षणाः सन्मूलाः सत्कारणाः सदायतनाः सदाश्रयाः स्थितिकाले सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः परिसमाप्तिर्यासां ताः सत्प्रतिष्ठाश्च प्रलयकाल इत्यर्थः ॥ ४ ॥

अथापि शुङ्गद्वाराऽपि सदधिगममाह—

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥

**अथेति** । यत्र यस्मिन्काले पुरुषः पातुमिच्छति पिपासतीत्येतन्नाम भवति तत्तदा तेज एव पीतमबादि शोषयन्नयते लोहितादिभावेन परिणमयति । तत्तत्र दृष्टान्तो यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तदा तेज उदन्येत्येवमाचष्ट उदकं नयतीत्युदन्यमुदन्येति छान्दसम् । तत्रैवं तेजसाऽपां लोके लोहितादिभावेन परिणम्यमानत्वे सत्येतदेव शरीराख्यमेव शुङ्गमुत्पतितमित्यादि समानम् ॥ ५ ॥

एवं तेजआदिनोपभुज्यमानेनोपचिते संघाते कस्य भूतस्य किं कार्यमित्यत आह—

तस्य क्व मूलꣳ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥

**यथेति** । यथा येन प्रकारेण हे सोम्येमास्तेजोबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्यैकैका

देवता त्रिवृत्त्रिवृद्भवति । तत्त्रिवृत्करणं पुरस्तादेव प्रागेवान्नमशितं त्रेधा विधीयत इत्याद्युक्तं भवतीत्यर्थः । अथ मरणद्वाराऽपि सदात्मत्वं निरूपयति—अस्येति । हे सोम्यास्य प्रयतो म्रियमाणस्य पुरुषस्य वाक्प्रथमं मनसि संपद्यत एवोपसंह्रियते । मनः प्राणे प्रसिद्धे संपद्यते । प्राणश्च तेजसि भौतिक आध्यात्मिके । यद्वा तदुपलक्षिते तदध्यक्षजीवे संपद्यते । तेजः परस्यां सदाख्यायां देवतायां संपद्यते । एवमस्या देवताया निमित्तस्य मनस उपसंहारात्तत्स्थजीवोपसंहारस्य सुषुप्तिकालवदर्थप्राप्तत्वादित्यर्थः ॥ ६ ॥

एवं सिद्धं सदद्वयत्वमुपसंहरति—

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥**

**इति षष्ठाध्यायस्याष्टमः खण्डः ॥ ८ ॥**

---

**स य इति** । एवं सन्मूलप्राप्तोऽज्ञानमात्रव्यवहितत्वात्पुनस्ततः सुषुप्तवदुत्थाय देहजालमाविशति जीवः स एष उक्तः सदाख्योऽणिमाऽणुभावोऽणुरेव सूक्ष्ममैतदात्म्यमेतदेव सन्नात्मा यस्य सर्वस्य तदेतदात्मा तस्य भाव ऐतदात्म्यम् । एतदात्मकमिदं सर्वं जगद्येन चाऽऽत्मनाऽऽत्मवत्तदेव सदाख्यं कारणं सत्यं परमार्थसदतः स एवाऽऽत्मा सर्पवत्कल्पितस्य जगतः स्वरूपं रज्जवदित्यर्थः । एवं सर्वस्य सदात्मत्वेऽपि मम किं स्यादित्यत आह—**तत्त्वमिति** । अतो हे श्वेतकेतो त्वमपि सत्सदाख्यं ब्रह्मासि । इत्येवं प्रत्यायितः पुत्र आह—**भूय इति** । यद्यहन्यहनि सर्वाः प्रजाः सुषुप्तौ सदात्मस्वरूपं प्राप्नुवन्ति तर्हि वयं सत्संपन्ना इति ताः कुतो न विदुरिति संदेहोऽस्य स्तत्कारणं दृष्टान्तेन मा मां भगवान्भूय एव पुनरपि विज्ञापयतु प्रत्याययत्विति पृष्टः पिता तत्कारणं वक्तुं प्रतिज्ञातवानित्याह—**तथेति** । ह सोम्य तथाऽस्तु त्वत्पृष्टं दृष्टान्तेन बोधयिष्यामीत्युवाचेत्यर्थः ॥ ७ ॥

इति षष्ठाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

( अथ षष्ठाध्यायस्य नवमः खण्डः )

---

तथा बोधयितुमाह—

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान्समवहारमेकताꣳ रसं गमयन्ति ॥ १ ॥**

---

१ क. °त्पदार्थायदे° ।

**यथेति ।** यथा सोम्य लोके मधुकृतो मधु कुर्वन्तीति मधुकृतो मधुकरमक्षिका मधु निस्तिष्ठन्ति निष्पादयन्ति कथं नानात्ययानां नानागतीनां नानादिक्कानां वृक्षाणां रसान्समवहारं समाहृत्यैकताभावं मधुत्वेन रसमिति वचनव्यत्ययेन रसान्गमयन्ति मधु च संपादयन्तीति यावत् ॥ १ ॥

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति ॥ २ ॥**

ते रसा यथा तत्र मधुनि न विवेकं लभन्ते । कथम् । अमुष्याऽऽम्रस्य वृक्षस्य रसोऽस्म्यहममुष्य पनसवृक्षस्य वा रसोऽस्म्यहमित्येवं यथा दृष्टान्तमेव खलु हे सोम्येमाः सर्वाः प्रजाः सुषुप्तौ मरणप्रलययोश्चापि सति सदाख्ये ब्रह्मणि संपद्य ते प्राप्य वयं सति संपद्यामहे संपन्ना भवामः संपन्ना इति न विदुर्न जानीयुरेकीभूतत्वादित्यर्थः ॥ २ ॥

तर्हि यथाशरीरमुत्थानं न स्यादित्यत आह—

**त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥**

**त इहेति ।** ते जीवा इह लोके सुषुप्तौ सत्संपत्तेः प्राग्यत्कर्मादिवशाद्व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वेत्येवमादि यत्स्वरूपं भवन्ति प्रतिपन्ना बभूवुस्ते पुनस्तत्कर्मज्ञानवासनाङ्किताः सन्त उत्थानसमये तद्व्याघ्रादिरूपमेवाऽऽभवन्त्यागत्य व्याघ्रो वा सिंहो वेत्येवं प्रतिपद्यन्ते । आत्मनः सदात्मत्वमज्ञात्वैव तत्संपन्नत्वादित्यर्थः ॥ ३ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥**

इति षष्ठाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

स एषोऽणिमेत्यादि पूर्ववत् । ननु तथाऽपि सत्यागमनानन्तरमहं सत आगतोऽस्मीत्येवं

ज्ञानं कस्मात्कारणान्न भवति तत्कारणं भूय एव मा भगवान्दृष्टान्तेन विज्ञापयत्वित्यादि समानम् ॥ ४ ॥

इति षष्ठाध्यायस्य नवमः खण्डः ॥ ९ ॥

( अथ षष्ठाध्यायस्य दशमः खण्डः । )

तत्सदृष्टान्तमाह—

**इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥**

**इमा इति** । हे सोम्येमाः प्राच्यः प्रागञ्चन्ति गङ्गाद्याः नद्यः पुरस्तात्पूर्वां दिशं प्रति स्यन्दन्ते स्रवन्ति तथा प्रतिच्यः प्रतीचीमञ्चन्तीति प्रतीच्यः सिन्ध्वाद्या नद्यः समुद्रादम्भोनिधेर्जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिता गङ्गादिनदीरूपिण्यः सत्यः पुनः समुद्रमेवापियान्ति समुद्रैकतां गच्छान्ति । अतः स प्रसिद्धः समुद्र एव भवति । ता नद्यो यथा तत्र समुद्रे समुद्रैकतां गता न विदुरियं गङ्गाऽहमस्मीयं सिन्धुरहमस्मीत्येवं न विजानन्ति ॥ १ ॥

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति षष्ठाध्यायस्य दशमः खण्डः ॥ १० ॥**

एवं यथादृष्टान्तमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य सतो वयमागच्छामह आगता इति वा न विदुरेकीभूतत्वादेवेत्यर्थः । त इह व्याघ्रो वेत्यादि समानम् । जलबुद्बुदफेनादीनां कारणीभूतजलभावं गतानां विनाशवत्सत्कारणसंपन्नानां जीवानां तु कथं तर्हि न विनाश इत्येतद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥२॥३॥

इति षष्ठाध्यायस्य दशमः खण्डः ॥ १० ॥

---

१ ख. °ञ्चनाग° । २ क. °लवद्ब° ।

(अथ षष्ठाध्यायस्यैकादशः खण्डः ।)

जीवनाशाभावं दृष्टान्तेन बोधयति—

अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥१॥

**अस्येति** । हे सोम्यास्य महतोऽनेकशाखादिसंयुक्तस्य वृक्षस्य यः कश्चिन्मूले परश्वादिनाऽभ्याहन्याद्घातयेत्सकृद्घातमात्रेण शोषादर्शनाज्जीवन्नेव सन्स्रवेत् । तथा यो मध्येऽभ्याहन्याज्जीवन्स्रवेत् । योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत् । अतः स एष वृक्ष इदानीं जीवेनाऽऽत्मनाऽनुप्रभूतो व्याप्तः सन्पेपीयमानो मूलैरुदकादिकं पिबन्मोदमानो हर्षं प्राप्नुवंस्तिष्ठति ॥ १ ॥

अस्य यदेकाꣳ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति ॥ २ ॥

अस्य वृक्षस्य यद्यदेकां शाखां जीवो जहाति त्यजति शाखायां प्रसृतमात्मांशमुपसंहरत्यथ तदा सा शाखा शुष्यति जीवकर्मक्षयात् । द्वितीयां जहातीत्यादि समानम् ॥ २ ॥

एवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति षष्ठाध्यायस्यैकादशः खण्डः ॥ ११ ॥

एवं यथादृष्टान्तमेव खलु सोम्य विद्धीति पिता होवाच । किम् । जीवापेतं जीवाते-युक्तं वाव किलेदं शरीरं म्रियते न जीवो म्रियते कृतनाशाकृताभ्यागमप्रसङ्गादित्यर्थः । अम्रियमाणो जीवो यदात्मना स्थितः स य एषोऽणिमेत्यादि समानम् । कथं पुनरिदं स्थूलं नामरूपात्मकं जगत्तद्विपरीतात्सत उत्पद्यत इत्येतद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापय-त्वित्यादि समानम् ॥ ३ ॥

इति षष्ठाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

( अथ षष्ठाध्यायस्य द्वादशः खण्डः )

---

सूक्ष्मस्य स्थूलकारणत्वं दृष्टान्तेन प्रतिपादयति—

**न्यग्रोधफलमत आहरेतीदं भगव इति भि-न्द्धीति भिन्नं भगव इति किमत्र पश्यसीत्य-ण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्य-सीति न किंचन भगव इति ॥ १ ॥**

**न्यग्रोध इति ।** न्यग्रोधस्य वटस्य फलमतोऽस्मात्प्रकृतान्न्यग्रोधादाहरेत्युक्तः श्वेतकेतु-रिदं फलमाहृतं हे भगव इति दर्शितवन्तं प्रति पिताऽऽह भिन्द्धि फलमित्युक्त इतर आह भिन्नं भगव इत्युक्ते तं पिताऽऽह किमत्र भिन्ने फले पश्यसीत्युक्त आहाण्व्योऽणुतरा इवेमा धाना बीजानि हे भगव इत्युक्ते पिताऽऽह हेऽङ्गाऽऽसां धानानां मध्य एकां धानां भिन्द्धीत्युक्त आह भिन्ना भगव इत्युक्ते पिताऽऽह किमत्रास्यां भिन्नायां धानायां पश्यसीत्युक्तः पुत्र आह न किंचन पश्यामि भगव इति ॥ १ ॥

**तꣳ होवाच यं वै सोम्यैतमणिमानं न निभा-लयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्य-ग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ॥ २ ॥**

उक्तवन्तं तं पुत्रं पितोवाच । किम् । हे सोम्य यं वा एतं वटबीजाणिमानमणुभावं न निभालयसे न पश्यसि । एतस्यैव वटबीजाणिम्नः कार्यभूतो हे सोम्यैष प्रत्यक्षतो दृश्यमानो महान्स्थूलः शाखादिमान्न्यग्रोधो वट उत्पन्नः संस्तिष्ठति । एवमेतद्दृष्टान्तानुरूपमेव सतोऽणिम्नः स्थूलं जगदुत्तिष्ठतीति श्रद्धत्स्व विश्वासिहि हे सोम्येत्यर्थः ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव**

मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति षष्ठाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

एवं महानित्यत्रस्थैवंशब्दो व्यवहितेन संबध्य व्याकृतः । स य इत्यादि समानम् । एतज्जगन्मूलं कस्मात्प्रत्यक्षेण नोपलभ्यते । तद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥

इति षष्ठाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

( अथ षष्ठाध्यायस्य त्रयोदशः खण्डः । )

---

तथा बोधयितुमाह—

लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥

**लवणमिति** । लवणमेतद्घटादावुदकेऽवधाय प्रक्षिप्याथ रात्रेरत्ययानन्तरं प्रातःकाले मा मामुपसीदथा उपगच्छथा इत्युक्तः स श्वेतकेतुस्तथा चकार यथा पित्रोपदिष्टं तथा कृतवान् । तं श्वेतकेतुं परेद्युः प्रातर्ह पितोवाच । किं यद्दोषा लवणमुदकेऽवाधा विक्षिप्तवानसि हेऽङ्ग तल्लवणमाहरेत्युक्तः पुत्रस्तल्लवणं ह किल दर्शनस्पर्शनाभ्यामवमृश्यान्विष्य यथा पूर्वं पिण्डरूपमभूत्तथा न विवेद विज्ञातवान् । यतस्तल्लवणं विलीनमेवाप्सु संश्लिष्टमेवेत्यर्थः ॥ १ ॥

तदुपलब्ध्युपायमाह—

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत्संवर्तते तꣳ होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥

अङ्ग हे वत्स[1]स्योदकस्यान्तादुपरिभागाद्गृहीत्वाऽऽचामाऽऽचमनं कुर्वित्युक्तं तथा कृतवन्तं पुत्रं पितोवाच । कथमित्युक्तः पुत्र आह लवणं[2] स्वादुत इति । अथोदकस्य मध्यादन्तादधोभागाच्च गृहीत्वाऽऽचामेत्यादि समानम् । अभिप्रास्य परित्यज्यैतल्लवणोदकमथानन्तरं मा मां प्रत्युपसीदथा आगच्छेत्युक्तः पुत्रस्तल्लवणं परित्यज्य ह किल तथा चकार पितृसमीपमाजगाम । किं कुर्वंस्तल्लवणं शश्वन्नित्यं वर्तत इति ब्रुवन् । तमागतं पुत्रं ह पितोवाच किमत्रास्मिन्देह एव किल वर्तमानं सत्सदाख्यं कारणं हे सोम्य त्वं न निभालयसे नोपलभसे दर्शनस्पर्शनाभ्यां लवणमिवात्रैव देह एव किल पुनः सदुपलप्स्यस इति शेषः । तत्रैव जिह्वयोपलब्धलवणवदित्यर्थः । समानमन्यत् ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति षष्ठाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥**

---

तर्हि तदुपायान्तरं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥

इति षष्ठाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

( अथ षष्ठाध्यायस्य चतुर्दशः खण्डः । )

---

तदुपायं दृष्टान्तेन बोधयति—

**यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥**

यथेति । यथा लोके हे सोम्य गन्धारेभ्यो देशविशेषेभ्यः कंचित्पुरुषमभिनद्धाक्षं बद्धचक्षुषमरण्ये तस्करैरानीतमभिनद्धाक्षमेव ततोऽतिजनेऽतिक्रान्तजने जनशून्यप्रदेशे विसृजेत् । स विसृष्टः पुरुषो यथा तत्रारण्य एव दिग्भ्रमोपेतः प्राङ्वा प्राङ्मुखो वोदङ्वोदङ्मुखो वाऽधराङ्वा प्रत्यङ्मुखो वा प्रध्मायीत शब्दं कुर्याद्विक्रोशेत् । कथम् । अभिनद्धाक्षोऽहं गन्धारेभ्यस्तस्करैरानीतोऽभिनद्धाक्ष एव विसृष्ट इति ॥ १ ॥

---

१ क. °त्सास्या° । २ क. णं स्यात् उ° ।

**तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाऽऽचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ॥ २ ॥**

एवं विक्रोशतस्तस्य यथाभिनहनं बन्धनं प्रमुच्य मुक्त्वा कारुणिकः कश्चित्प्रब्रूयात्किमेतां दिशं गन्धारा एतां दिशं व्रजेत्येवमुक्तः स मुक्तबन्धनो ग्रामाद्ग्रामान्तरं पृच्छन्पण्डित उपदिष्टार्थग्रहणसमर्थो मेधावी स्वयमूहापोहसमर्थो गन्धारानेवोपसंपद्येत प्राप्तो भवति । एवं गन्धारपुरुषवदाचार्य उपदेष्टा यस्य मोहपटाभिनद्धाक्षस्य पुण्यापुण्या[1]दितस्करैरनेकानर्थसंकुलदेहारण्ये प्रवेशितस्य स आचार्यपुरुषः सूक्ष्मं तत्त्वं वेद जानाति नान्य इत्याचार्योपदेशः स्वस्वरूपावगम उपाय इत्युक्तं भवति । तस्याऽऽचार्यवतः पण्डितस्य मेधाविनोऽविद्याबन्धनविनिर्मुक्तस्य तावदेव तावानेव कालश्चिरं विलम्बः सत्संपत्तेरिति शेषः । किं यावद्यावत्कालपर्यन्तं न विमोक्ष्ये पुरुषव्यत्ययेन न विमोक्ष्यते प्रारब्धकर्मणो भोगाद्विनाशेन यावद्देहपातो न भवतीति यावत् । अथ तदा देहपातसमकालमेव संपत्स्ये संपत्स्यते विमुक्तो भवतीत्यर्थः । समानमन्यत् ॥ २ ॥

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति षष्ठाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥**

---

तर्ह्याचार्यवान्येन क्रमेण सत्संपद्यते तत्क्रमं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्वित्यादि समानम् ॥ ३ ॥

इति षष्ठाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

( अथ षष्ठाध्यायस्य पञ्चदशः खण्डः । )

---

तत्क्रमं दर्शयति—

**पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न**

---

१ ख. °ण्यादितदशेषसत्स्वरूपावगम उपाय इत्यु° ।

**वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥**

पुरुषमिति । हे सोम्य पुरुषमुपतापिनं जराद्युपतापवन्तं मुमूर्षुं ज्ञातयो बान्धवाः परिवेष्ट्योपासते । कथं जानासि मां पितरं जानासि मां भ्रातरमित्येवं पृच्छतस्तस्य मुमूर्षोर्यावत्पर्यन्तं न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया न संपद्यत इति प्रत्येकं संबध्यते । तावत्पर्यन्तं जानाति ॥ १ ॥

**अथ यदाऽस्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति षष्ठाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥**

---

अथ यदाऽस्य मुमूर्षोर्वाङ्मनसि संपद्यते मन आध्यात्मिके प्राणे प्राणो भौतिके तेजसि तेजः परस्यां सदाख्यायां देवतायां संपद्यतेऽथ तदा न जानातीत्येवं विदुषः सत्संपत्तिक्रमः पूर्वोक्तमुमूर्षुविद्वत्सत्संपत्तिक्रमतुल्य एव । एतावांस्तु विशेषः—यदविद्वान्संपन्नोऽपि पुनरत्राऽऽवर्तते विद्वांस्तु नाऽऽवर्तत इतिवत्तर्ह्यत्र यत्कारणं तद्भूय एव मा भगवान्दृष्टान्तेन विज्ञापयत्वित्यादि समानम् ॥ २ । ३ ॥

इति षष्ठाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

( अथ षष्ठाध्यायस्य षोडशः खण्डः । )

---

तद्बोधयितुं दृष्टान्तमाह—

**पुरुषꣳ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥ १ ॥**

**पुरुषमिति** । हे सोम्योतापि पुरुषं हस्तगृहीतं बद्धहस्तं राजपुरुषा आनयन्ति । किं कृतवानयमितीतरैः पृष्टाश्च त आहुरपहार्षीद्धनमस्यायमिति । इतरे च चौर्यकर्मणि संदिह्यमानं प्रत्याहुस्त्वं किं स्तेयमकार्षीरिति पृष्टे तस्मिंश्चापह्नुवति सत्याहुः परशुमस्मा एतदर्थं संतपत परशुतापं कुरुत शोधयत्वयमात्मानमिति । स यदि तस्य स्तैन्यस्य कर्ता भवति बहिश्चापह्नुते तर्हि तत एवानृताभिसंधत्वादेवानृतमन्यथाभूतं सन्तमन्यथात्मानं कुरुते सोऽनृताभिसंधो मिथ्याभिनिवेशवाननृतेनाऽऽत्मानमन्तर्धाय व्यवहितं कृत्वाऽथ तप्तं परशुं प्रतिगृह्णाति स तदा दह्यतेऽथ हन्यते राजपुरुषादिभिः ॥ १ ॥

**अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसंधः सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥**

अथ यदि तस्य स्तैन्यस्याकर्ता भवति तत एव स्तैन्यकर्माकरणादेव सत्यमात्मानं कुरुते स सत्याभिसंधः सत्येनाऽऽत्मानमन्तर्धाय व्यवहितं कृत्वा तप्तं परशुं प्रतिगृह्णाति स सत्याभिसंधो न दह्यतेऽथ मुच्यते च मिथ्याभियोक्तृभ्य इत्यर्थः ॥ २ ॥

एवमेव दार्ष्टान्तिकेऽपि योज्यमित्यभिप्रायेणोक्तं दृष्टान्तमनुवदति—

**स यथा तत्र नादाह्येतैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥**

**इति षष्ठाध्यायस्य षोडशः खण्डः ॥ १६ ॥**

---

**इति छान्दोग्योपनिषदि षष्ठोऽध्यायः समाप्तः ॥ ६ ॥**

---

**स यथेति** । उभयोस्तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वे, अथानृताभिसंधवत्सत्याभिसंधो यथा तत्र तप्तपरशुग्रहणकर्मणि नादाह्येत सत्यव्यवहितहस्ततलत्वादेवं सद्ब्रह्माभिसंधीतरयोः शरीरपातकाले तुल्यायामपि सत्संपत्तौ विद्वान्संपद्यते न पुनर्व्याघ्रादिदेहग्रहणायाऽऽवर्तते । अविद्वांस्तु पुनस्तद्ग्रहणायाऽऽवर्तते विकारानृताभिसंधत्वादित्यर्थः । समानमन्यत् । एवं पित्रोपदिष्टा विद्यासंपत्तिः श्वेतकेतोर्वृत्तेति श्रुतिराह—तद्धेति । अस्य पित्रा ह किल तत्त्वमसीति दृष्टान्तैर्हेतुभिश्चोक्तं कार्यकारणेभ्यः प्रविविक्तमात्मतत्त्वं श्वेतकेतुः सदेवाहमस्मीति विजज्ञौ विज्ञातवान् । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ३ ॥

जन्माद्यस्य यतो यदेतदखिलं संविश्य जीवात्मना
नामादिप्रविवेककृद्दशदिशं प्राप्यापि नो जन्तवः ॥
जानन्त्येव न यत्प्रकारशतकैः प्राप्यं गुरोर्वाक्यतोऽ-
वाप्योन्मुच्यत एव तद्यदनिशं ध्याये नृसिंहाभिधम् ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपा-
दशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्यव्या-
ख्यायां मिताक्षरायां षष्ठोऽध्यायः ।

---

( अथ सप्तमाध्यायस्य प्रथमः खण्डः । )

---

उत्तमाधिकारिणं प्रत्येवं साक्षाद्ब्रह्मात्मत्वमुपदिश्येदानीं शाखाचन्द्रन्यायेन मध्यमाधिकारिणो ब्रह्मबुद्धिस्थिरीकरणार्थमधमस्याधिकारिणो वा सोपानारोहणन्यायेन ध्यानार्थं नामादिप्राणान्तसंकीर्तनद्वारा ब्रह्मोपदेष्टुं सप्तमोऽध्यायः प्रवर्तते । तत्र ब्रह्मविद्यायाः स्तुत्यर्थं निरतिशयश्रेयःप्राप्तिसाधनत्वख्यापनार्थमाख्यायिकामारचयति—

ॐ ।

**अधीहि भगव इति होपससाद सन-
त्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन
मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स
होवाच ॥ १ ॥**

**अधीहीति ।** हे भगवो भो भगवंस्त्वमधीह्यधीष्व मां विज्ञापयेति मन्त्रमुच्चारयन्नारदो ह किल सनत्कुमारमुपससादोपसन्नवान् । तं यथाशास्त्रमुपसन्नं नारदं सनत्कुमार उवाच । किं यदात्मविषयं किंचित्त्वं वेत्थ तेन तत्प्रख्यापनेनेदमहं जाने नेत्येवं मा मामुपसीदोपसर्पततस्तव विज्ञानादूर्ध्वं ते तव तुभ्यमहं वक्ष्यामीति गुरुणोक्तः स नारद उवाच ॥ १ ॥

**ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथ-
र्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं
पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं
देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां
नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽ-
ध्येमि ॥ २ ॥**

किम् । ऋग्वेदमहमध्येमि स्मरामि । यद्वेत्थेति विज्ञानस्यैव पृष्टत्वात् । तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदमितिहासपुराणात्मकं पञ्चमवेदं वेदानां भारतपञ्चमानां वेदं व्याकरणं वेदार्थवेदनहेतुत्वात् । पित्र्यं श्राद्धसंकल्पं राशिं गणितं दैवमुत्पातविज्ञानं निधिं महाकालादिनिधिशास्त्रं वाकोवाक्यं तर्कशास्त्रमेकायनं नीतिशास्त्रं देवविद्यां निरुक्तं ब्रह्मणो वेदत्रयस्य विद्यां शिक्षादिरूपां ब्रह्मविद्यां भूतविद्यां भूततन्त्रं क्षत्रविद्यां धनुर्वेदं नक्षत्रविद्यां ज्यौतिषं सर्पदेवजनविद्यां सर्पविद्यां गारुडं गन्धर्वविद्यां गीतनृत्यादिज्ञानान्ये-तत्सर्वं हे भगवोऽहमध्येमि स्मरामीत्यर्थः ॥ २ ॥

तर्हि सर्वज्ञस्त्वं कृतकृत्योऽसीत्यत आह—

**सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मविच्छ्रु-तꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्म-विदिति सोऽहं भगवः शोचामि तं मा भगवा-ञ्छोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥**

**सोऽहमिति** । हे भगवः सोऽहमेतत्सर्वं जानन्नपि मन्त्रविदेव कर्मविदेवास्मि । मन्त्रेषु कर्माणीति वक्ष्यमाणत्वान्नाऽऽत्मवित् । नाऽऽत्मानं वेद्मीत्यर्थः । मा भवतु तद्वेदनं तस्य को वोपयोग इत्यत आह—**श्रुतमिति** । हि यस्मादात्मानं वेत्तीत्यात्मविच्छोकं मनस्ताप-मकृतार्थबुद्धितां तरत्यतिक्रामतीत्येवं मे मम भगवद्दृशेभ्यो युष्मत्सदृशेभ्यः श्रुतमागमज्ञान-मस्त्येव । स चाहमनात्मवित्त्वाद्धे भगवः शोचाम्यकृतार्थबुध्या संतप्ये । अतः शोकाविष्टं मां शोकस्य शोकसागरस्य पारं भगवांस्तारयत्वात्मज्ञानोडुपेन कृतार्थबुद्धितामापादयत्व-भयं गमयत्विति यावत् । तमेवमुक्तवन्तं प्रत्याचार्य उवाच । किं यद्वै किंचैतदृग्वेदादि त्वमध्यगीष्ठा अधीतवानासि तत्सर्वं नामैव विकार एव वाचारम्भणश्रुतेः ॥ ३ ॥

उक्तमेवोपपादयति—

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वण-श्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामो-पास्स्वेति ॥ ४ ॥**

**नाम वा ऋग्वेद** । इत्याद्युक्तार्थेन । तदुपसंहरति—**नामैवैतदिति** । फलितमाह—**नामेति** । नाम ब्रह्मेत्येवमुपास्स्वेति ॥ ४ ॥

तत्फलमाह—

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

**इति सप्तमाध्यायस्य प्रथमः खण्डः ॥ १ ॥**

---

**स य इति ।** स यः कश्चिन्नाम ब्रह्मेत्युपास्ते, तस्योपासकस्य यावन्नाम्नो गतं गोचरं तत्तस्मिन्विषये यथाकामचारो यथेच्छचरणं भवतीत्यर्थः । उपसंहरति—**यो नाम ब्रह्मेत्युपास्त इति ।** इत्युक्तान्नाम्नोऽन्यद्ब्रह्मदृष्टयर्हं पृच्छति—**अस्तीति ।** हे भगवन्नाम्नः सकाशाद्भूयोऽधिकतरं किं ब्रह्मदृष्टयर्हमस्तीत्येवं पृष्टो गुरुराह—**नाम्नो वाव भूयोऽस्तीति ।** एवमुक्तो नारद आह—**तदिति ।** यद्यस्तिकिंचिन्नाम्नो भूयस्तर्हि तन्मे मे भगवान्ब्रवीतु कथयत्वित्यर्थः ॥ ५ ॥

इति सप्तमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथ सप्तमाध्यायस्य द्वितीयः खण्डः )

---

एवमुक्तो गुरुराह—

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्श्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो

व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

वागिति । वाग्वाव वागिन्द्रियमेव नाम्नो भूयस्तस्यैव जिह्वामूलीयादिष्टस्थानेषु स्थित्वा नामात्मकवर्णहेतुत्वात् । भूयस्त्वमन्वयेन साधयति—वागित्यारम्याहृदयज्ञं चेत्यन्तेन । हृदयज्ञं हृदयप्रियं तद्विपरीतमहृदयज्ञम् । प्रसिद्धार्थत्वात् । अथ व्यतिरेकेण भूयस्त्वं साधयति—यदित्यारम्या हृदयज्ञ इत्यन्तेन । यदि वै वाङ्नाभविष्यत्तदभावेऽध्ययनतदर्थज्ञानाभावेन धर्मादि न व्यज्ञपयिष्यन्न विज्ञातमभविष्यत् । समानमन्यत् ॥ १ । २ ॥

इति सप्तमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथ सप्तमाध्यायस्य तृतीयः खण्डः । )

---

मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति

**भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति सप्तमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

---

मनो विवक्षाबुद्धिलक्षणान्तःकरणवृत्तिर्वाव भूयस्तस्य वा चो वक्तव्ये प्रेरकत्वात् । मनसो वागादिव्यापकत्वं दृष्टान्तपूर्वकमाह—**यथेति** । यथा लोके द्वे वाऽऽमलके फले द्वे वा कोले बदरीफले द्वौ वाऽक्षौ बिभीतकफले मुष्टिरनुभवति व्याप्नोति । मुष्टावन्तर्भवतीति यावत् । एवं यथादृष्टान्तं वाचं नाम च मनोऽनुभवति मनस्यन्तर्भवतीति यावत् । इतोऽपि भूयस्त्वमित्याह—**स यदेति** । स पुरुषो यदा यस्मिन्काले मनसाऽन्तःकरणेन मनस्यति मनस्यलं विवक्षाबुद्धिं करोति । कथं मन्त्रानधीयीयोच्चारयेयमित्येवं विवक्षां कृत्वाऽथानन्तरमधीते तथा कर्माणि कुर्वीयेति चिकीर्षाबुद्धिं कृत्वाऽथ कुरुते । तथा पुत्रांश्च पशूंश्चेच्छेयेति प्राप्तीच्छां कृत्वाऽथ तत्प्राप्त्युपायानुष्ठानेनेच्छते पुत्रादीन्प्राप्नोतीति यावत् । तथेमं च लोकममुं च परलोकमिच्छेयेच्छेयमिति तत्प्राप्त्युपायानुष्ठानेनाथेच्छते प्राप्नोति । अतो मनो ह्यात्मा सत्येव मनस्यात्मनः कर्तृत्वादिसिद्धेः । मनो हि लोकस्तस्मिन्सत्येवं लोकप्राप्त्यनुष्ठानसंभवात् । तस्मान्मनो हि ब्रह्म । यत एवं तस्मान्मन उपास्स्वेत्यादि समानम् ॥ १ ॥ २ ॥

इति सप्तमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

( अथ सप्तमाध्यायस्य चतुर्थः खण्डः । )

---

**संकल्पो वाव मनसो भूयान्यदा वै संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

संकल्पोऽपि विषयाणां कर्तव्याकर्तव्यविभागसमर्थनरूपाऽन्तःकरणवृत्तिर्वाव मनसो भूयान् । अत्र कार्यकारणभावहेतुमाह—**यदेति** । यदा वै संकल्पयत इदं कर्तव्यमिदं नेत्येवं विषयान्विभजतेऽथानन्तरं मनस्यति मन्त्रानधीयीयेत्याद्याकाङ्क्षाबुद्धिं करोति । अथ वाचमीरयति प्रेरयते । कुत्र तां वाचमु अपि नाम्नि नामसामान्यमात्रोच्चारणे निमित्तं तस्मिंश्च नाम्नि मन्त्रा ऋगादिलक्षणा ह शब्दविशेषा एकं भवन्त्यन्तर्भवन्ति विशेषाणां सामान्यान्तर्भावस्य प्रसिद्धत्वात् । मन्त्रेषु च कर्माण्येकं भवन्ति मन्त्रप्रकाशितानामेव तेषामुत्पत्तेः ॥ १ ॥

---

१ क. वाचो भू° ।

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाऽऽकाशं च समकल्पन्ताऽऽपश्च तेजश्च तेषाꣳ संक्लृप्त्यै वर्षꣳ संकल्पते वर्षस्य संक्लृप्त्या अन्नꣳ संकल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते प्राणानाꣳ संक्लृप्त्यै मन्त्राः संकल्पन्ते मन्त्राणाꣳ संक्लृप्त्यै कर्माणि संकल्पन्ते कर्मणाꣳ संक्लृप्त्यै लोकः संकल्पते लोकस्य संक्लृप्त्यै सर्वꣳ संकल्पते स एष संकल्पः संकल्पमुपास्स्वेति ॥ २ ॥

अतस्तानि ह वा एतानि मनआदीनि संकल्पैकायनानि संकल्प एवैकोऽयनं गमनं प्रलयो येषां तानि संकल्पैकायनानि संकल्पात्मकानि संकल्पस्वरूपाण्युत्पत्तौ संकल्पे प्रतिष्ठितानि स्थितिकाल इत्यर्थः । इतोऽपि संकल्पस्य भूयस्त्वमित्याह—**समक्लृपतामिति ।** द्यौश्च पृथिवी च द्यावापृथिवी समकल्पेतां संकल्पं कृतवत्याविव निश्चले लक्ष्येते । तथा वायुश्चाऽऽकाशं चैतावपि समकल्पेतां संकल्पं कृतवन्ताविव स्वेन रूपेण दृश्येते तथाऽऽपश्च तेजश्च तान्यपि समकल्पन्ताम् । इतश्च तस्य महत्त्वमित्याह—**तेषामिति ।** तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै संक्लृप्तेः संकल्पनिमित्तं वर्षं वृष्टिः संकल्पते समर्था भवति । तथा वर्षस्य संक्लृप्त्यै संकल्पनिमित्तमन्नं संकल्पते समर्थं भवतीत्येतत्प्रसिद्धम् । अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते 'अन्नं दाम' इति श्रुतेः । प्राणानां संक्लृप्त्यै मन्त्राः संकल्पन्ते प्राणवतामेव मन्त्राध्ययनदर्शनात् । मन्त्राणां संक्लृप्त्यै तत्प्रकाशितानि कर्माणि फलदानाय संकल्पन्ते कर्मणां संक्लृप्त्यै तत्फलभूतो लोकः कर्तृगामितया संकल्पते लोकानां ( कस्य ) संक्लृप्त्यै सर्वं जगत्स्वरूपावैकल्याय संकल्पते । यदिदं फलावसानं सर्वं जगत्स एष संकल्पः स्यात्संकल्पमूलत्वात् । अतः संकल्पस्य महत्त्वात्संकल्पमुपास्स्वेति ॥ २ ॥

तत्फलमाह—

स यः संकल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति

संकल्पाद्भाव भूयोऽस्तीति तन्मे भगवान्ब्रवी-
त्विति ॥ ३ ॥

इति सप्तमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

**स य इति ।** स यः कश्चित्संकल्पं ब्रह्मेत्युपास्ते स उपासकः क्लृप्तान्वै, अस्येमे लोकाः फलमिति धात्रा कल्पिताँल्लोकान्ध्रुवानत्यन्ताध्रुवापेक्षया नित्यान्स्वयमपि ध्रुवः सन्प्रतिष्ठितानुपकरणसंपन्नान्स्वयं प्रतिष्ठितः सन्नव्यथमानानमित्रादिरहितान्स्वयमव्यथमानः सन्नभिसिध्यत्यभिप्राप्नोति । समानमन्यत् ॥ ३ ॥

इति सप्तमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथ सप्तमाध्यायस्य पञ्चमः खण्डः । )

---

चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ
संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु
नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु
कर्माणि ॥ १ ॥

चित्तं चेतयितृत्वं प्राप्ते वस्तुनीदं वस्त्वेवमिति तदनुरूपा तज्जातीयागामिन्यपि तत्प्रयोजनत्वावधारणरूपा च चेतनाख्यवृत्तिमदन्तःकरणं वाव संकल्पाद्भूयः । तत्साधयति—**यदेति ।** यदा वै प्राप्तं वस्त्विदमेवेति चेतयतेऽथ तदादानायापहानाय वा संकल्पयते । अथ मनस्यतीत्यादि पूर्ववत् ॥ १ ॥

इतोऽपि तस्य वैशिष्ट्यमित्याह—

तानि ह वा एतानि चित्तैकायनानि चित्ता-
त्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहु-
विदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं
वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ
यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रू-
षन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं
प्रतिष्ठा चित्तमुपास्स्वेति ॥ २ ॥

**तस्मादिति ।** यस्माच्चित्तं संकल्पादिमूलं तस्माद्यद्यपि बहुविद्बहुशास्त्रादिपरिज्ञानवान्सन्नचित्तो भवत्युक्तचेतयितृत्वसामर्थ्यविहीनो भवति तदाऽप्येनं नायमस्ति विद्यमा-

नोऽप्यसत्तम एवेत्याहुर्निपुणाः । यदयं यच्चायं किंचिच्छास्त्रादि वेद श्रुतवांस्तदस्य वृथैव । कस्मात् । यद्धे यद्ययं विद्वान्स्यादित्थमेवमचित्तो न स्यात् । अथ यदल्पविदपि चित्तवान्भवति तस्मा एतदुक्तार्थग्रहणायैवोतापि शुश्रूषन्ते श्रोतुमिच्छन्ति । कस्माच्चित्तमेव हि यस्मादेषां संकल्पादीनामेकमयनमित्यादि पूर्ववत् ॥ २ ॥

**स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥**

**इति सप्तमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

स उपासकश्चित्तवान् । बुद्धिमद्गुणैः संचिताँल्लोकान् । समानमन्यत् ॥ ३ ॥

इति सप्तमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

( अथ सप्तमाध्यायस्य षष्ठः खण्डः । )

---

**ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥**

**स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति सप्तमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

ध्यानं वाव शास्त्राद्देवताद्यालम्बनः प्रत्ययसंतानश्चित्ताद्भूयश्चित्तस्यानेकाग्रतादोषोपहतत्वयातीतादिफलनिरूपणासामर्थ्यादेकाग्रतारूपस्य ध्यानस्य चेतयितृत्वं प्रति करणत्वात् । फलद्वाराऽपि तन्माहात्म्यमाह—**ध्यायतीवेति** । पृथिव्यादयो ध्यायन्त इव निश्चला दृश्यन्ते योगीव । सुखबोधमन्यत् । पुनरप्यन्वयव्यतिरेकाभ्यां तदाह—**तस्मादिति** । यस्माध्यानं महत्त्वहेतुस्तस्माद्य इह लोके मनुष्याणां मध्ये महत्तां धनैर्गुणैर्वा महत्त्वं प्राप्नुवन्ति धनादिमहत्त्वहेतुं लभन्ते त एव पुरुषा ध्यानापादांशाः, ध्यानस्याऽऽपादनमनुष्ठानं तेन तत्फललाभो लक्ष्यते । तेषामंशो येषामस्ति ते ध्यानापादांशा इव भवन्ति निश्चला इव लक्ष्यन्ते । अथ पुनर्ये त्वल्पाः क्षुद्राः किंचिदपि धनादिमहत्त्वैकदेशप्राप्तास्ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासका उपवादिन उप समीप एव परदोषं वदितुं शीलं येषां त उपवादिनश्च भवन्तीत्यर्थः । अथान्वयमुपसंहरति—**अथेति** । अथ धनादिनिमित्तमहत्त्ववशादन्यान्प्रति प्रभवन्तीति प्रभवो राजादयो ध्यानापादांशा इवैव ते भवन्तीत्याद्युक्तार्थम् ॥ १ ॥ २ ॥

इति सप्तमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथ सप्तमाध्यायस्य सप्तमः खण्डः । )

---

**विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति॥१॥**

विज्ञानं शास्त्रार्थविषयं वाव ध्यानाद्भूयस्तस्य ध्यानकारणत्वात् । ज्ञानस्य महत्त्वे साधयति—विज्ञानेन वा ऋग्वेदं विजानातीत्यादिना ज्ञानमुपास्स्वेत्यतःप्राक्तनेन । यथार्थज्ञानं ध्यानकारणं तदृग्वेदादिकं शास्त्रीयविज्ञानेनैव प्रमाणतया विजानाति । अन्यत्सर्वमृज्वर्थम् ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवी-त्विति ॥ २ ॥

इति सप्तमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

**स य इति ।** फलोक्तौ विज्ञानं शास्त्रविषयं ज्ञानमन्यविषयनैपुण्यं तद्वतो लोकांस्त-द्वत्पुरुषाद्युक्ताँल्लोकान्स उपासकोऽभिसिध्यति प्राप्नोति । समानमन्यत् ॥ २ ॥

इति सप्तमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

( अथ सप्तमाध्यायस्याष्टमः खण्डः )

---

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानव-तामेको बलवानाकम्पयते स यदा बली भव-त्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥
स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं त-त्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्यु-पास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥
इति सप्तमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

बलमन्नोपभोगजनितं मनसो विज्ञेयप्रतिभानसामर्थ्यं वाव ज्ञानाद्भूयः । किंच प्रत्यक्षं तस्य ततो भूयस्त्वमित्याह—**अपि हीति** । विज्ञानवतां शतमप्येको बलवानाकम्पयति चालयतीत्यतो विज्ञानाद्भूयस्त्वम् । अत्र तयोः कार्यकारणभावमुपपादयति—**स यदेति** । स पुरुषो यदा बली बलवान्भवत्यथोत्थातोत्थानस्य कर्ता भवत्युत्तिष्ठंश्च गुर्वादीनां परिचरिता शुश्रूषायाः कर्ता भवति परिचरंस्तेषामुपसत्ता समीपगोऽन्तरङ्गः प्रियो भवति । उपसीदंश्च गुर्वादेर्द्रष्टा भवति । ततस्तदुक्तस्य श्रोता भवति । उपपत्तितस्तस्य मन्ता भवति । ततो बोद्धा तदुक्तस्य निश्चयवान्भवति निश्चित्य तदुक्तार्थस्य कर्ताऽनुष्ठाता भवति । ततो विज्ञानानुष्ठानस्य फलानुभविता भवतीत्यर्थः । तस्य माहात्म्यादपि भूयस्त्वमित्याह—बलेन वै पृथिवी तिष्ठतीत्यादि सुबोधम् ॥ १ ॥ २ ॥

इति सप्तमाध्यायस्याष्टमः अष्टमः खण्डः ॥ ८ ॥

---

( अथ सप्तमाध्यायस्य नवमः खण्डः । )

---

**अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्री-र्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽम-न्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याऽऽ-यै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्न-मुपास्स्वेति ॥ १ ॥**

अन्नं वाव बलाद्भूयो बलहेतुत्वादित्यन्वयव्यतिरेकाभ्यां साधयति—**तस्मादिति** । यस्माद्बलस्यान्नं कारणं तस्माद्यद्यपि कश्चिद्दश रात्रीर्दश दिनानि नाश्नीयात्तर्हि प्रायेण म्रियते । अथवा यद्यपि उ अपि ह जीवेत्तदाऽद्रष्टेत्यादि पूर्वविपरीतं सर्वं भवति । अथ यद्यन्नस्याऽऽयै, इति वर्णव्यत्ययेन । आयी, आयश्चाऽऽगमनमन्नस्य प्राप्तिः सा विद्यते यस्याऽऽयी प्राप्तिमान्भवति तदा द्रष्टेत्यादि समानम् ॥ १ ॥

फलमाह—

**स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पा-नवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽ-**

स्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्ती-
ति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

**स य इति** । उपासकोऽन्नवतो बह्वन्नयुक्तान्पानवतो बहूदकयुक्तांश्च लोकानभिसि ध्यतीत्युभयोर्नित्यसंबन्धात्पानग्रहणम् । समानमन्यत् ॥ २ ॥

इति सप्तमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथ सप्तमाध्यायस्य दशमः खण्डः । )

---

आपो वावान्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न
भवति व्याधीयन्ते प्राणा अन्नं कनीयो भवि-
ष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा
भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता
येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्दे-
वमनुष्या यत्पशवश्च वयांसि च तृणवनस्प-
तयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवे-
मा मूर्ता अप उपास्स्वेति ॥ १ ॥
स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्का-
मांस्तृप्तिमान्भवति यावदपां गतं तत्रास्य
यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽ-
स्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽ-
स्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

आपो वावान्नाद्भूयस्यः, अपामन्नकारणत्वादित्यन्वयव्यतिरेकाभ्यां साधयति—**तस्मादिति** । यस्मादेवं तस्माद्यदा यस्मिन्काले सुवृष्टिः शोभना वृष्टिर्न भवति तदा प्राणा व्याधीयन्ते । कुतः । कनीयोऽल्पतरमन्नं भविष्यतीत्येतन्निमित्तात् । यदा सुवृष्टिः सस्यहिता भवत्यानन्दिनो हृष्टाः प्राणा भवन्ति । कुतः । अन्नं बहु भविष्यतीति । सर्वजगदात्मकत्वा-

---

१ क. °त्तानिय° ।

दप्यपां भूयस्त्वमित्याह—आप इति । आप एवेमा मूर्तामूर्तभेदाकारपरिणताः । येयं पृथिवी यदन्तरिक्षमित्यादि समानम् ॥ १ ॥ २ ॥

इति सप्तमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथ सप्तमाध्यायस्यैकादशः खण्डः । )

---

तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याऽऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥

तेजो वावाद्भ्यो भूयः तेजसोऽप्कारणत्वादित्याह—तदिति । तद्वा एतत्तेजो वायुमागृह्यावष्टभ्य स्वात्मना निश्चलीकृत्याऽऽकाशमभिव्याप्नुवद्यदा तपति तदाऽऽहुर्लौकिकाः । किं निशोचति संतपति सामान्येन जगन्नितपति देहानतो वर्षिष्यति वै प्रसिद्धमिति । तस्मात्तेज एव तदुक्तमद्भुतं स्वस्वरूपं पूर्वं प्रथमं दर्शयित्वाऽथानन्तरमपः सृजते । अतस्तेजसो भूयस्त्वमित्याह । विध्यन्तरेणापि तेजसोऽप्कारणत्वमाह—तदेतदिति । तदेतत्तेज ऊर्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च सहाऽऽह्लादा स्तननशब्दाश्चरन्ति जायन्ते । तस्मादेतद्दर्शनाल्लौकिका आहुः । किं विद्योतते स्तनयत्यतो वर्षिष्यति वै प्रसिद्धमिति । समानमन्यत् ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

२ क. मूर्तिभे° ।

स य इति । फलोक्तौ तेजस्वी सन्स उपासकस्तेजस्वतो बाह्यतेजोवतो भास्वतोऽन्तःप्रकाशवतोऽत एवापहततमस्कानपनीतबाह्याध्यात्मिकाज्ञानादितमस्कान्लोकानभिसिध्यतीत्यादि समानम् ॥ २ ॥

इति सप्तमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

———

( अथ सप्तमाध्यायस्य द्वादशः खण्डः । )

**आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाऽऽह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति॥१॥**

आकाशो भूताकाशो वाव तेजसो वायुसहिताद्भूयान्वायुमागृह्येत्यनेन सतेजसो वायोरुक्तत्वान्न तस्य पृथग्वक्तव्यत्वमित्यर्थः । भूयस्त्वं साधयति—**आकाश इति** । आकाश आकाशान्तर्वर्तिनौ वै सूर्याचन्द्रमसौ विद्युन्नक्षत्राण्यग्निरित्येतानि तेजोरूपाणि यच्च यदन्तर्वर्ति तत्ततोऽल्पमिति प्रसिद्धियुक्तं तस्य ततो भूयस्त्वमित्यर्थः । इतश्चास्याऽऽकाशस्य भूयस्त्वमित्याह—**आकाशेनेति** । आकाशनाऽऽह्वयत्याह्वानं करोति । आहूतश्चाऽऽकाशेन शृणोति । शृण्वतोक्तं चान्य आकाशेन प्रतिशृणोति । सर्वोऽपि लोक आकाशे रमते क्रीडत्यन्योन्यम् । तथाऽऽकाशे न रमते च बन्ध्वादिवियोगे सति आकाशे जायत उत्पद्यते न मूर्ते । तथाऽऽकाशमभिलक्ष्याङ्कुरादि जायते न प्रतिलोममित्यर्थः ॥ १ ॥

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति सप्तमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥**

———

स य इत्यादि फलोक्तावाकाशवतो वै स उपासको लोकान्प्रकाशवतश्च लोकानसंबाधानन्योन्यपीडारहितानुरुगायवतो विस्तीर्णगतिमतश्च लोकानभिसिध्यतीत्यादिसमानम् ॥ २ ॥

इति सप्तमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

———

( अथ सप्तमाध्यायस्य त्रयोदशः खण्डः । )

---

कार्यकारणभावेनोत्तरोत्तरं व्यापकमुक्त्वेदानीं निमित्तनैमित्तिकभावेन तदाह—

**स्मरो वावाऽऽकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति ॥ १ ॥ स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति सप्तमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥**

---

**स्मर इति ।** स्मरणं स्मरोऽन्तःकरणधर्मो वावाऽऽकाशाद्भूयः । लिङ्गव्यत्ययेन भूयानित्यर्थः । भूयस्त्वमन्वयव्यतिरेकाभ्यां साधयति—**तस्मादिति ।** यस्मात्स्मरणस्य भूयस्त्वं तस्माद्यद्यपि बहवः पुरुषा एकत्राऽऽसीरन्नुपविशेयुस्ते तत्राऽऽसीना न स्मरन्तश्चेत्स्युस्तर्हि तेऽन्योन्यं भाषितमपि कंचन शब्दं न वै नैव शृणुयुस्तथा मन्तव्यं विज्ञातव्यं वा यदि ते न स्मरन्तश्चेत्स्युस्तदा न मन्वीरन्न विजानीरन् । यदा वा ते पुरुषाः श्रोतव्यादि स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्नित्यर्थः । किंच स्मरेण स्मरणेन वै ममैते पुत्रा इति पुत्रान्विजानात्यतः स्मरस्य भूयस्त्वात्स्मरमुपास्स्वेत्याद्युक्तोऽर्थः ॥ १ ॥ २ ॥

इति सप्तमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

( अथ सप्तमाध्यायस्य चतुर्दशः खण्डः । )

---

**आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥१॥**

आशाऽप्राप्तवस्त्वाकाङ्क्षा वाव स्मराद्भूयसी । कुतः । आशया वै, अन्तःकरणारूढयेद्धो

वर्धित आशाविषयं स्मरन्स्मरो भवति । स्मरभूतश्च सन्नृगादीन्मन्त्रानधीते । अधीत्य तदर्थं च बुद्ध्वा कर्माणि कुरुते तत्फलभूतांश्च पुत्रान्पशूंश्चेच्छते तत्साधनान्यनुतिष्ठति । इमं चामुं च लोकमिच्छते । इहामुत्रलोकेच्छया क्रमेण लोकसंग्राहकपारलौकिकानि कर्माण्यनुतिष्ठत्याशोद्धः सन्नित्यर्थः ॥ १ ॥

**स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृध्यन्त्यमोघा ह्यस्याऽऽशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥**

**इति सप्तमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥**

स य इति फलोक्तौ । आशया ब्रह्मत्वेनोपासितयाऽस्योपासकस्य सर्वे कामाः समृध्यन्ति समृद्धिं गच्छन्ति । अमोघाः सफला अस्योपासकस्याऽऽशिषः प्रार्थना भवन्तीत्यर्थः ॥ २ ॥

इति सप्तमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

( अथ सप्तमाध्यायस्य पञ्चदशः खण्डः । )

**प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥**

प्राणो वै सर्वजगद्विधारकः सूत्रभूत आशाया भूयान् । तद्दृष्टान्तेन समर्थयति—**यथेति** । यथा लोके रथचक्रस्यारा नाभौ रथचक्रपिण्डिकायां समर्पिताः प्रोता एवं यथादृष्टान्तमस्मिँल्लिङ्गव्यष्टिसमुदायरूपे मुख्ये प्राणेऽध्यात्मादिरूपेणावस्थिते जीवत्वोपाधिभूते सर्वं यथा यथोक्तं नामाद्याशान्तमाशापाशविपाशितं स्मृतिनिमित्तसद्भावं जगत्समर्पितम् । एतदुक्त्योक्तं प्राणस्य सर्वात्मकत्वं साधयति—प्राणः प्राणेन स्वशक्त्यैव याति स्वतन्त्रत्वात् । प्राणः प्राणं स्वात्मानमेव प्राणाय स्वात्मन एव ददात्यप्राणस्य दातृत्वाद्यसंभवात् ।

तथा प्राणो ह पिता प्राणो ह माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

कथमेतदित्यतः पित्रादिशब्दानां प्राणविषयत्वमन्वयव्यतिरेकाभ्यामाह—

**स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥**

**स यदीति ।** स यः कश्चिद्यदि पित्रादीनां मध्येऽन्यतमं प्रति भृशमिव किंचित्त्वंकारादियुक्तं वचनमाह प्रयुञ्ज्यात्तदैनं पार्श्वस्थास्त्वां धिगस्त्वित्याहुः कथयेयुः । कुतः पितृहा पितृहन्ता वै त्वमसि समानमन्यत् ॥ २ ॥

**अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥**

अथैतान्पुत्रादीनुत्क्रान्तप्राणांस्त्यक्तदेहान्यद्यपि शूलेन प्रसिद्धेन कृत्वा समासं समस्य पुञ्जीकृत्य व्यतिषं व्यत्यस्यावयवान्विभज्य संदहेद्भस्मी कुर्यात्तथाऽप्येनं क्रूरकर्मापि कुर्वाणं नैव ब्रूयुः पितृहाऽसीत्यादि समानमन्यत् ॥ ३ ॥

**प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥**

**इति सप्तमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥**

---

अतः प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भूतानि तस्मात्प्राणो भूयानित्यर्थः । एतद्विज्ञानफलमाह—**स वा इति ।** स वै, एष प्राणविदेवं यथोक्तप्रकारेण प्रथमं वाक्यतो विजानस्तत एवं यथोक्तान्वयव्यतिरेकार्थोपपत्त्या मन्वानश्चिन्तयन्पश्चादेवं यथोक्तं सर्वात्मकं प्राणं पश्यन्ननुभवन्साक्षात्कुर्वन्नतिवादी नामाद्याशान्तं जगदतीत्य वदनशीलो भवति तमतिवादिनं ब्रह्मादिस्तम्बपर्यन्तं तस्य जगतः प्राणात्माऽहमिति ब्रुवाणं चेद्यदि त्वमति-

वाद्यसीत्युक्तिमान्भवसीति केचिद्ब्रूयुस्तर्हि बाढमतिवाद्यस्मीति ब्रूयान्नापह्नुवीतापलापनं न कुर्यात्तत्करणे हेत्वभावादित्यर्थः ॥ ४ ॥

इति सप्तमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

(अथ सप्तमाध्यायस्य षोडशः खण्डः।)

---

सर्वातिशयः प्राण एव नातः परमस्तीति प्रश्नकरणादुपरतं नारदं मत्वा सनत्कुमारो मिथ्याज्ञानात्प्रच्यावयन्नाह—

**एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥**

**इति सप्तमाध्यायस्य षोडशः खण्डः ॥ १६ ॥**

---

**एष त्विति**। तुशब्दः प्राणविदतिवादित्वपक्षनिरासार्थः। एष वा एवातिवदति यः सत्येन सर्वातिक्रान्तभूमाख्यपरमार्थसत्यविज्ञानतयाऽतिवदति प्राणविदस्तु नामाद्यपेक्षयाऽतिवादित्वं न निरङ्कुशं तर्हि सोऽहं भगवः सत्येनातिवदान्यतिवदितुमिच्छानीत्युक्तः सनत्कुमार आह सत्यं त्वेव विजिज्ञासितव्यम्। इत्युक्तो नारद आह—**सत्यमिति**। हे भगवंस्त्वत्तोऽहं सत्यं विजिज्ञासे विशेषेण ज्ञातुमिच्छेयमित्यर्थः ॥ १ ॥

इति सप्तमाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

( अथ सप्तमाध्यायस्य सप्तदशः खण्डः । )

---

एवमुक्तो गुरुराह—

**यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥**

**इति सप्तमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥**

---

**यदेति**। यदा वै सदेव भूमाख्यं परमार्थतः सत्यं ततोऽन्यदनृतमिति विजानात्यथात-

स्तदेव सत्यं वदतीत्यर्थः । एतदेवान्वयव्यतिरेकाभ्यां साधयति—**नाविजानन्निति ।** उक्तपरमार्थसत्यं नाविजानन्सत्यं वदति, किंतु विजानन्नेव सत्यं वदति । अतो विज्ञानं त्वेतदर्थं विजिज्ञासितव्यमित्युक्ते नारद आह—**विज्ञानं भगवो विजिज्ञास इतीति ।** उक्तोऽर्थः ॥ १ ॥

इति सप्तमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

( अथ सप्तमाध्यायस्याष्टादशः खण्डः । )

एवमुक्तो ज्ञानस्यापि कारणं गुरुरुपदिशति—

**यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥**

**इति सप्तमाध्यायस्याष्टादशः खण्डः ॥ १८ ॥**

**यदा वा इति ।** मनुत इति मतिर्मननं मन्तव्यविषयैस्तर्कः । समानमन्यत् ॥ १ ॥

इति सप्तमाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

(अथ सप्तमाध्यायस्यैकोनविंशतितमः खण्डः।)

एवमेव तस्यापि कारणपरम्परामुपदिशति—

**यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥**

**इति सप्तमाध्यायस्यैकोनविंशतितमः खण्डः ॥ १९ ॥**

**यदा वै श्रद्दधातीत्यादिना ।** श्रद्धाऽऽस्तिक्यबुद्धिस्तां करोतीत्यादि समानमन्यत् ॥ १ ॥

इति सप्तमाध्यायस्यैकोनविंशतितमः खण्डः ॥ १९ ॥

---

१ क. °यमर्थः । २ क. °रोति ते श्रद्दधाती°।

( अथ सप्तमाध्यायस्य विंशः खण्डः । )

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठ-
ञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा
त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजि-
ज्ञास इति ॥ १ ॥
इति सप्तमाध्यायस्य विंशतितमः खण्डः ॥ २० ॥

निस्तिष्ठतीति । निष्ठा गुरुशुश्रूषादिः ॥ १ ॥
इति सप्तमाध्यायस्य विंशतितमः खण्डः ॥ २० ॥

( अथ सप्तमाध्यायस्यैकविंशः खण्डः । )

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्ति-
ष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञा-
सितव्येति कृतिं भगवो विजिज्ञास इति॥१॥
इति सप्तमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

करोति । कृतिरिन्द्रियसंयमश्चित्तैकाग्रताकरणं च ॥ १ ॥
इति सप्तमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

( अथ सप्तमाध्यायस्य द्वाविंशः खण्डः । )

यदा वै सुखं लभतेऽथ करोति नासुखं
लब्ध्वा करोति सुखमेव लब्ध्वा करोति
सुखं त्वेव विजिज्ञासितव्यमिति सुखं
भगवो विजिज्ञास इति ॥ १ ॥
इति सप्तमाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

यदा वै सुखं भूमाख्यं वक्ष्यमाणं लभते लब्धव्यं मयेति मन्यते, अथ तदा तदुद्देशे करोति । समानमन्यत् ॥ १ ॥
इति सप्तमाध्यायस्यद्वाविंशः खण्डः ॥ २२ ॥

( अथ सप्तमाध्यायस्य त्रयोविंशः खण्डः । )

---

**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥**

**इति सप्तमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥**

---

यो वै भूमा स महान्निरतिशयस्तत्सुखं यतो भूम्नोऽर्वाक्सातिशयत्वादल्पं तस्मिन्नल्पे सुखं नास्त्यल्पस्याधिकतृष्णाहेतुत्वात् । अतः परमाख्यो भूमैव सुखम् । तस्माद्भूमा त्वेव विजिज्ञासितव्य इत्यादि समानमन्यत् ॥ १ ॥

इति सप्तमाध्यायस्य त्रयोविंशः खण्डः ॥ २२ ॥

---

( अथ सप्तमाध्यायस्य चतुर्विंशः खण्डः । )

---

तल्लक्षणमाह—

**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यँ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥**

**यत्रेति** । यत्र यस्मिन्भूम्नि तत्त्वेनान्यद्द्रष्टव्यमन्येन करणेनान्यो द्रष्टाऽनुपश्यति तथा नान्यच्छृणोति नान्यद्विजानाति स भूमा । एतच्चेतरेन्द्रियव्यापारनिषेधोपलक्षणपरम् । तथा च सकलसांसारिकव्यवहाराभावोपलक्षितं तत्त्वं भूमेति लक्षणार्थः । अथ यत्राविद्याविषयोऽन्योऽन्येनान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं परिच्छिन्नमविद्याकालभाविस्वप्नदृश्यवत् । यो वै भूमा तदमृतमविनाशि । अथ यदल्पं तन्मर्त्यं विनाशीत्यर्थः । सुखत्ववचनाद्भूम्न आश्रयं पृच्छति—**स इति** । स एवंलक्षणो भूमा हे भगवो भगवन्कस्मिन्प्रतिष्ठित इति पृष्ट आह—**स्वे महिम्नीति** । यदि कचित्प्रतिष्ठामिच्छसि तर्हि स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितः । यदि वा परमार्थतश्चेदाश्रयं पृच्छसि तर्हि ब्रूमो न महिम्नि प्रतिष्ठित आश्रित इति ॥ १ ॥

कथं तर्हि स्वे महिम्नीत्युक्तमित्यतस्तस्य स्वस्वरूपमात्रविषयत्वान्न स्वस्वरूपातिरिक्तनिषेधविषयप्रसिद्धमहिमविषयत्वमित्याह—

**गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥**

**इति सप्तमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥**

---

**गोअश्वमिति** । गावश्चाश्वाश्च गोअश्वमिह लोके महिमेत्याचक्षते लौकिकाः । तथा हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानि च प्रसिद्धानि महिमेत्याचक्षते तदाश्रितस्तत्प्रतिष्ठितश्च चैत्राभिधो भवति । एवं स्वतोऽन्यमहिमानमाश्रितो भूमेति नाहं ब्रवीमि । अत्र व्यवहितसंबन्धमाश्रित्य हेतुमाह—**अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति** । भूम्नि तु स्वतोऽन्यत्वाभावादित्यर्थः । तथा हि कथं ब्रवीषीत्यत आह—**ब्रवीमीति** । एवं ब्रवीमीति ह किल सनत्कुमारो होवाचेत्यर्थः ॥ २ ॥

इति सप्तमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

---

( अथ सप्तमाध्यायस्य पञ्चविंशः खण्डः । )

---

कथमित्यपेक्षायामाह—

**स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥**

**स एवेति** । यतः स भूमैवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतो वर्तते । अतः स एव भूमैवेदं सर्वं तद्व्यतिरेकेणान्यस्याभावात् । तस्मान्नासौ क्वचित्प्रतिष्ठित इत्यप्रतिष्ठितत्वे हेतुरुक्तो भवतीत्यर्थः । यत्र नान्यत्पश्यत्यधिकरणाधिकर्तव्यनिर्देशात्स एवाधस्तादिति च परोक्षनिर्देशाद्द्रष्टृजीवादन्यो भूमेति शङ्का मा भूदिति भूमानमेवाहमात्मना निर्दिशति—**अथात इति** । अनन्तरमहमित्येवमाकारेण भूमाऽऽदिश्यते निर्दिश्यत इत्यहंकारादेशः । समानम् ॥ १ ॥

अहमिति संघातोऽथ विवेकिभिर्दृश्यतेऽतस्तस्याऽऽत्मत्वशङ्कां वारयितुमाह—

**अथात आत्मादेश एवाऽऽत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥**

**इति सप्तमाध्यायस्य पञ्चविंशः खण्डः ॥ २५ ॥**

---

**अथात इति।** अनन्तरमात्मनैव केवलेन शुद्धेन सत्स्वरूपेणाऽऽदिश्यत इत्यादेशः। समानमन्यत्। इदमात्मैवेति पश्यतो जीवन्मुक्तस्य फलमाह—**स वेति।** स वा एष विद्वान्मननविज्ञानाभ्यां तर्कोपदेशिकरूपाभ्यामेवं यथावद्भमानं पश्यन्साक्षादनुभवन्नात्मन्येव रमणं यस्येत्यात्मरतिस्तथाऽऽत्मक्रीडः। देहमात्रसाधना रतिः स्त्र्यादिबाह्यसाधना क्रीडा। मिथुनं द्वंद्वजनितं सुखमानन्दः शब्दादिनिमित्तं सुखम्। एतत्सर्वं बाह्यसाधननिमित्तं यथाऽविदुषो न तथा विदुषः किं तर्ह्यात्मज्ञाननिमित्तमेवेत्यर्थः। अथ विदेहमुक्तिमाह—**स स्वराडिति।** स विद्वान्पतिते देहे स्वराड्भवति। तस्य स्वराड्भावमापन्नस्य सर्वेषु लोकेषु कामचारो यथेच्छाचारो भवतीत्यर्थः। एवं फलोक्तिद्वारा विद्यां स्तुत्वाऽविद्वन्निन्दाद्वाराऽपि तां स्तौति—**अथेति।** अथोक्तदर्शनादन्यथा वैपरीत्येन विदुस्तेऽन्यराजानोऽन्यः परो राजा स्वामी येषां तेऽन्यराजानः क्षय्यलोकाः क्षयिष्णुलोकाश्च भवन्त्यत एवैषामविदुषां सर्वेषु लोकेष्वकामचारो न यथेच्छाचारो भवतीत्यर्थः ॥ २ ॥

इति सप्तमाध्यायस्य पञ्चविंशः खण्डः ॥ २५ ॥

---

( अथ सप्तमाध्यायस्य षड्विंशः खण्डः। )

---

विद्यास्तुत्यर्थमेव विदुषः स्रष्टृत्वमाह—

**तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज**

आत्मत आप आत्मत आविर्भावतिरोभावा-
वात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमा-
त्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प
आत्मतो मन आत्मतो वागात्मतो नामाऽऽ-
त्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ
सर्वमिति ॥ १ ॥

तस्य ह वा एतस्येत्यारभ्य सर्वमितीत्यन्तेन । तस्य प्रकृतस्योक्तदर्शनादिमतो ह वै, एतस्य स्वाराज्यं प्राप्तस्य विदुष आत्मनः स्वात्मनः सकाशादेव प्राणादेर्नामान्तस्योत्पत्ति-रभूत्क्रीडादि सर्वं च व्यवहारजातं चेति । समानमन्यत् ॥ १ ॥

ब्राह्मणोक्ते विद्याफले मन्त्रमपि संवादयति—

तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं
नोत दुःखताꣳ सर्वꣳ ह पश्यः पश्यति सर्व-
माप्नोति सर्वश इति स एकधा भवति
त्रिधा भवति पञ्चधा सप्तधा नवधा
चैव पुनश्चैकादशः स्मृतः शतं च दश चैकश्च
सहस्राणि च विꣳशतिराहारशुद्धौ सत्त्व-
शुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृति-
लम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदित-
कषायाय तमसस्पारं दर्शयति भगवान्सनत्कु-
मारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द
इत्याचक्षते ॥ २ ॥

इति सप्तमाध्यायस्य षड्विंशः खण्डः ॥ २६ ॥

---

इति च्छान्दोग्योपनिषदि सप्तमोऽध्यायः समाप्तः ॥ ७ ॥

**तदिति ।** तस्मिन्नर्थ एष श्लोको मन्त्रो भवति । पश्यतीति पश्यो यथोक्तदर्शी विद्वान्मृत्युं मरणं न पश्यति न रोगं च पश्यति । नोतापि दुःखतां दुःखभावं च पश्यति । पश्यो विद्वान्सर्वं ह सर्वमेवाऽऽत्मानं पश्यति । अतः सर्वशः सर्वप्रकारेण सर्वमाप्नोति पूर्णो भवतीति यावदिति । किंच स विद्वान्सृष्टेः प्रागेकधा भवति सृष्टिकाले पुनस्त्रिधा भवति संहारकाले पुनरेकश्च भवतीत्येवं स्वतन्त्र इत्यर्थः । अथास्या विद्याया अव-

भासहेतुभूतान्तःकरणस्य शुद्धिसाधनमुपदिशति—**आहारशुद्धाविति** । भोक्तुर्भोगायाऽऽह्रियत इत्याहारः शब्दादिविषयविज्ञानं तस्य शुद्धी रागद्वेषादिदोषैरसंस्पर्शस्तस्यामाहारशुद्धौ सत्त्वस्यान्तःकरणस्य शुद्धिर्विमलता सत्त्वशुद्धौ सत्यां यथावगते भूम्नि ध्रुवाऽनवच्छिन्ना स्मृतिः स्मरणं लभ्यते । स्मृतिलाभे च सति सर्वेषामविद्याकृताशेषानर्थायासरूपाणां ग्रन्थीनां रागादीनां हृदयाश्रयाणां विप्रमोक्षो विशेषेण प्रमोक्षणं विनाशो भवतीत्यर्थः । अथाऽऽख्यायिकां श्रुतिः स्वमुखेनैवोपसंहरति—**तस्मा इति** । तस्मै नारदाय मृदितो विनाशितो ज्ञानवैराग्यादिद्वारेण कषायो रागद्वेषादिलक्षणो यस्य स मृदितकषायस्तस्मै मृदितकषायाय तमसोऽविद्यालक्षणात्पारं परमार्थतत्त्वं भगवानुत्पत्त्यादिवेत्ता सनत्कुमारो दर्शयति दर्शितवान् । तमेव सनत्कुमारं स्कन्दः कार्तिकेय इत्याचक्षते कथयन्ति तद्विदः । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ २ ॥

सद्विद्याविरहादनेकमहिमत्रय्यादिविद्याविदो
ह्यासीच्छोकमहार्णवे निपतनं श्रीनारदस्याप्यृषेः ।
यं भूमानमवाप्य तत्क्षणमभूच्छोकार्णवोत्तारणं
प्राणान्तेशदशामगम्यममलं तं नौमि सिंहाननम् ।

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्यपादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्यव्याख्यायां मिताक्षरायां सप्तमः प्रपाठकः समाप्तः ॥

---

( अथाष्टमाध्यायस्य प्रथमः खण्डः । )

---

दिग्देशगतिशून्यं परमार्थसदद्वयं ब्रह्म सदेकमेवाद्वितीयमात्मैवेदं सर्वमिति च षष्ठसप्तमयोरधिगमितमुत्तममध्यमाधिकारिणोरिदानीं मन्दाधिकारिणां देशादिभेदवदेव वस्त्विति बुद्धिर्न शक्यते सहसा तादृग्ब्रह्मविषया कर्तुमतस्ते तावन्मार्गस्था भवन्तु ततः शनैः परमार्थसदपि ग्राहयिष्यामीति मन्यमाना तद्बुद्ध्यनुरोधेनैव हृदयपुण्डरीकदेशं सत्यादिगुणजातं मूर्धन्यया नाड्या गतिस्तत्साधनविशेषा ब्रह्मचर्यादयश्चोपदेष्टव्या इत्यष्टमाध्यायात्मिका श्रुतिः प्रवर्तते—

**अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥**

**अथेति ।** अथोत्तममध्यमबुद्धीन्प्रति निर्विशेषब्रह्मोपदेशानन्तरं मन्दबुद्धीन्प्रति सविशेषं ब्रह्मोपदिश्यत इत्यर्थः । तत्र तावदुपास्यायतनं निर्दिशति—**यदिदमिति ।** अस्मिन्प्रत्यक्षे ब्रह्मोपलब्धिहेतुत्वाद्ब्रह्मणः सदाख्यस्य पुरमिव पुरं शरीरं ब्रह्मपुरं तस्मिन्ब्रह्मपुरे शरीरे यदिदं प्रसिद्धं दहरमल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्मेव वेश्म हृदयमेवास्मिन्वेश्मन्यन्तर्मध्ये दहरः सूक्ष्म आकाश इवाशरीरत्वादाकाशोऽव्याकृताख्यस्तस्मिन्नाकाशे ब्रह्माणि यदन्तर्मध्ये वक्ष्यमाणं द्यावापृथिव्यादिरूपं तत्तेनाऽऽकाशाख्येन सहान्वेष्टव्यं शास्त्राद्युपायैः । अन्विष्य च तद्वाव तदेव साश्रयं द्यावापृथिव्यादि विजिज्ञासितव्यं साक्षात्करणीयमित्यर्थः । यद्वा तस्मिन्हृदयपुण्डरीके दहराकाशं ब्रह्म तदन्वेष्टव्यम् । समानमन्यत् ॥ १ ॥

अस्य यथाश्रुतमर्थं गृहीत्वा चोद्यं श्रुतिरुत्थापयति—

**तं चेद्ब्रुयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥**

**तं चेदिति ।** तमेवमुक्तवन्तं चाऽऽचार्यं चेद्यद्यन्तेवासिनो ब्रूयुश्चोदयेयुः । कथम् । यद्यस्मिन्नुक्तार्थे ब्रह्मपुरे दहरं पुण्डरीकं वेश्मास्ति ततोऽपि दहरोऽल्पतर आकाशः । अतः किं तत्राऽऽकाशे वर्तते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यं न किंचन विद्यत इत्यर्थः । अत्राऽऽचार्यं श्रुतिर्नियोजयति—**स ब्रूयादिति ।** स आचार्यस्तं प्रति ब्रूयात् ॥ २ ॥

**यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥**

किम् । अन्तःकरणोपाधिवशाद्दहरोऽपि सन्स्वतस्तु यावान्वै परिमाणतः प्रसिद्धो यो भौतिक आकाशस्तावानेषोऽन्तर्हृदय आकाशः । अस्मिंश्च बुद्ध्युपाधिके ब्रह्माकाशेऽन्तरेव मध्य एवोभे द्यौश्च पृथिवी च द्यावापृथिवी समाहिते सम्यगाहिते । तथोभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि च समाहिताविति प्रत्येकं संबध्यते । तथा यच्च वस्त्वस्याऽऽ-

त्मनो देहवत आत्मीयत्वेनेह लोके वर्तमानमस्ति यच्च नष्टं भविष्यच्च वस्त्वात्मीयत्वे[न] नास्ति तत्सर्वमस्मिन्हृद्याकाशे ब्रह्मणि समाहितं वर्तत एवेति नासदित्यर्थः ॥

अत्रापि शङ्कासमाधाने अवतारयति—

**तं चेद्ब्रुयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरा वाऽऽप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥**

**तं चेद्ब्रुयुरिति ।** इदमेवमुक्तवन्तमाचार्यमन्तेवासिनश्चेद्ब्रूयुः किमस्मिन्ब्रह्मपुरे हृ तदुपलक्षितान्तराकाशे ब्रह्माख्ये चेद्यदीदं सर्वं द्यावापृथिव्यादि समाहितं सर्वाणि च स्थावरजङ्गमानि भूतानि सर्वे कामाः काम्यमाना विषयाः समाहिताः । तर्हि यदा यस्मिन्काल एतच्छरीरं जरा वा वलीपलितादिलक्षणाऽऽप्नोति प्राप्नोति शस्त्रादिना वृक्णं प्रध्वंसते वा विस्रंसते विनश्यति ततो देहनाशात्तदाश्रितं हृदयपुण्डरीकवर्ति ब्रह्मापि नश्यत्येवेति किमतिशिष्यतेऽवशिष्यते न किंचिदप्यवशिष्यत इत्यर्थः ॥ ४ ॥

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

एवमन्तेवासिभिश्चोदिते स आचार्यो ब्रूयात् । किमस्य देहस्य जरयैतद्यथोक्तमन्तराकाशाख्यं ब्रह्म न जीर्यति देहवन्न विक्रियते नाप्यस्य शरीरस्य वधेन शस्त्रादिघातेनैतद्धन्यत आकाशवत् । यत एतद्ब्रह्मैव पुरं ब्रह्मपुरं सत्यमवितथमत एवास्मिन्ब्रह्मपुर आत्मनि बाहिः प्रार्थ्यमानाः कामाः समाहिताः । एष चोक्ताकाशो भवतामात्मा स्वरूपम् । तल्लक्षणमाह— **अपहतपाप्मेति ।** अपहतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा तथा विजरो विगतजरो विमृत्युर्विगतमृत्युर्विशोको विगतः शोक इष्टादिवियोगनिमित्तमानससंतापो [ यस्य ] विजिघत्सः विगताशनेच्छोऽपिपासः पानेच्छारहितः सत्यकामोऽवितथकामस्तद्धेतुभूताः संकल्पा अपि सत्या यस्यासौ सत्यसंकल्प इत्यर्थः । एतादृगात्मस्वरूपाज्ञाने पुण्यफलक्षयोऽस्वातन्त्र्यं चेति वक्तुं तावदस्वातन्त्र्ये दृष्टान्तमाह—**यथा हीति ।** यथा

१ क. °रेद्देहस्तद्व° ।

ह्येवेह लोके यथा राज्ञोऽनुशासनं तथा प्रजा अन्वागच्छन्ति प्राप्नुवन्ति । किं यं यमन्तं प्रदेशमभिकामा अर्थिन्यो भवन्ति तं तमेवेत्यर्थः । एतदेव विवृणोति—**यमिति** । यं जनपदं देशं यं क्षेत्रभागं वाऽर्थिन्यो भवन्ति तं तमेव जनपदं क्षेत्रभागमुपजीवन्त्युपभुञ्जत इत्यर्थः ॥ ५ ॥

अथ पुण्यफलक्षयं सदृष्टान्तमाह—

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहाऽऽत्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥**

**इत्यष्टमाध्यायस्य प्रथमः खण्डः ॥ १ ॥**

---

**तद्यथेति** । तत्तत्र दृष्टान्तो यथेह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां प्रजाना सेवादिकर्मजितो लोकः पराधीनोपभोगः क्षीयत एवं यथादृष्टान्तमेवामुत्र परलोकेऽप्यग्निहोत्रादिपुण्यकर्मजितो लोकः क्षीयत इत्यर्थः । एतद्दोषद्वयं केषामित्यतस्तद्विषयं दर्शयन्नुक्ताकामचारदृष्टान्तस्य दार्ष्टान्तिकमाह—**तद्य इति** । तत्तत्रैवं सतीह लोके य आत्मानं यथोक्तलक्षणमननुविद्य यथोपदेशमनु स्वसंवेद्यतामकृत्वैतान्यथोक्तानात्मस्थान्कामांश्चाननुविद्य व्रजन्त्यस्माद्देहात्प्रयन्ति तेषामविदुषां सर्वेषु लोकेष्वकामचारोऽस्वतन्त्रता भवति राजानुशासनानुवर्तिनीनां प्रजानामिवेत्यर्थः । अथ विदुषां फलमाह—**अथेति** । अथ ये पुनरिह लोक आत्मानं यथावदनुविद्य तत्स्थान्सत्यान्कामांश्चानुविद्य व्रजन्त्यस्माद्देहात्प्रयन्ति तेषां सर्वेषु लोकेषु कामचारो भवति राज्ञ इवेत्यर्थः ॥ ६ ॥

इत्यष्टमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

( अथाष्टमाध्यायस्य द्वितीयः खण्डः । )

---

कामचारत्वमेव दर्शयति—

**स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥**

स यदीति । स यथोक्तो विद्वांस्त्यक्तदेहो यदि पितृलोककामः पितरो जनयितारस्त एव सुखहेतुत्वेन भोग्यत्वाल्लोकास्तेषु कामसंबद्धेच्छा यस्य भवति तस्य संकल्पादेव पितरो मानसा एव समुत्तिष्ठन्त्यात्मसंबन्धितामापद्यन्ते तेन पितृलोकेन संपन्नः समृद्धो महीयते वर्धते महिमानमनुभवतीत्यर्थः ॥ १ ॥

अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥

अथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥

अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥

अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥

अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥

अथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयते ॥ ७ ॥

अथ यदि गीतवादितलोककामो भवति संकल्पादेवास्य गीतवादिते समुत्तिष्ठतस्तेन गीतवादितलोकेन संपन्नो महीयते ॥ ८ ॥

अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥

एवमेव प्रसिद्धार्था मात्रादिपर्याया व्याख्येयाः ॥ २—९ ॥

यथोक्तेष्वेव कामचारत्वशङ्कां वारयितुमाह—

**यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ १० ॥**

**इत्यष्टमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥**

---

**यं यमन्तमिति ।** यं यमन्तं प्रदेशं प्रत्यभिकामो भवति । यं च कामं काम्यमुक्तपित्रादेरन्यदपि कामयते स कामः प्रदेशश्चास्य विदुषः संकल्पादेव समुत्तिष्ठति तेन संकल्पमात्रात्समुत्थेन कामादिसंपन्नो महीयत इत्युक्तार्थः ॥ १० ॥

इत्यष्टमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

( अथाष्टमाध्यायस्य तृतीयः खण्डः । )

---

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साहजननार्थमनुक्रोशन्ती श्रुतिराह—

**त इमे सत्याः कामा अनृतापिधानास्तेषाꣳ सत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥**

**त इम इति ।** त इम आत्मस्थाः सत्याः कामा अनृतमपिधानं येषां तेऽनृतापिधानाः । एतदेव स्पष्टयति—**तेषामिति ।** तेषामात्मस्थानामेव सतां कामानामनृतं मिथ्याभूतं रूपादितृष्णाया यथेच्छाचारत्वलक्षणमपिधानमाच्छादकम् । कथमेतदवगम्यत इत्यत आह—**यो यो हीति ।** हि यस्मादस्याविदुषो य इष्टः पुत्रो भ्राता वेतोऽस्माल्लोकात्प्रैति म्रियते तमिष्टं हृदयाकाशे विद्यमानमपीह लोके पुनर्दर्शनाय कश्चिदिच्छन्नपि न लभते ॥ १ ॥

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥**

अथ पुनर्ये चास्य विदुषो जीवा इह लोके जीवन्ति ये च प्रेताः संबन्धिनो यच्चान्यद्वस्त्रान्नादीह लोक इच्छन्नपि न लभते तत्सर्वमत्र हृदये ब्रह्मणि गत्वा विन्दत इति । उक्तं निगमयति—अत्र हीति । हि यस्मादत्र हार्दाकाशे ब्रह्मण्यस्य विदुष एते कामाः सत्या एव वर्तन्तेऽतोऽवगम्यतेऽनृतापिधाननिमित्त एवैषामविद्यावस्थायामलाभो विद्यावस्थायां तदभावेन लाभस्योक्तत्वादित्यर्थः । सतामप्यलाभं दृष्टान्तेनाऽऽह—**तद्यथेति** । तत्तत्र दृष्टान्तो यथा लोकेऽपि हिरण्यनिधिं निक्षेपं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञा निधिक्षेत्रमजानन्तो निधेरुपर्युपरि संचरन्तोऽपि निधिं न विन्देयुरेवमेव यथादृष्टान्तमेव सर्वा अविद्यावत्योऽहरहः प्रत्यहं सुषुप्तिकाल एतं हार्दाकाशाख्यं ब्रह्मैव लोकं गच्छन्त्योऽपि प्राप्नुवत्योऽपि न विन्दन्ति न लभन्ते । कुतः । अनृतेन मिथ्याज्ञानकृततृष्णाभेदेन प्रत्यूढाः स्वरूपाद्बहिष्कृताः । अतः कष्टमिदं यत्स्वायत्तमपि न लभ्यत इति भावः ॥ २ ॥

नामादाविव हृदये ब्रह्महत्स्थारोपमात्रमिति शङ्कां वारयति—

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ३ ॥**

**स वा इति** । स वा अपहतपाप्मेति प्रकृत एष आकाशशब्दवाच्य आत्मा हृदि हृदयपुण्डरीके वर्तत एव । कथमवगम्यत इत्यत आह—**तस्येति** । तस्यैतस्य हृदयब्रह्मण एतदेव निरुक्तं निर्वचनम् । किम् । हृद्यन्तरात्मा वर्तत इति । यस्मादेवं तस्माद्धृदयमिति हृदयनामनिर्वचनप्रसिद्ध्या तत्रास्तीत्यवगम्यत इति भावः । आत्मावगतिफलमाह—**अहरिति** । एवंविद्धृदयमात्मेति जानन्नहरहः प्रत्यहं स्वर्गं लोकं हार्दं ब्रह्मैति प्रतिपद्यते ॥ ३ ॥

अथ विदुषो मुक्त्यालम्बनं ब्रह्म तादात्म्येन स्तोतुमाह—

**अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

**अथेति** । अथ विवेकानन्तरं य एष प्रकृतः संप्रसादः सुषुप्तौ स्वेनाऽऽत्मना सता संपन्नः सन्सम्यक्प्रसीदतीति संप्रसादो विद्वानस्माच्छरीरात्समुत्थायेदं शरीरं हित्वा शरीरात्मभावनां परित्यज्य परं परमात्मलक्षणं ज्योतिर्ज्ञप्तिरूपमुपसंपद्य स्वास्थ्यमुपगम्य स्वेनाऽऽ-

त्मीयेन रूपेणाभिनिष्पद्यते । एष युष्माकमात्मेत्याचार्योऽन्तेवासिभ्यो होवाच । किंचैतदात्मस्वममृतं भूमरूपमेवाभयमत एव ब्रह्म तस्मादुपासनार्हमिति भावः । अथोपासनाविधिस्तुत्यर्थमुपास्यब्रह्मणो नाम निर्दिशति—**तस्येति** । तस्य ह वा एतस्य ब्रह्मणो नामाभिधानम् । किम् । **सत्यमिति** ॥ ४ ॥

उपास्यस्तुत्यर्थं नामाक्षराण्याह—

**तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥**

**इत्यष्टमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥**

---

**तानीति** । तानि ह वैतानि त्रीणि ब्रह्मणो नामाक्षराणि । कानि । सतीयमिति । तकार ईकारानुबन्ध उच्चारणार्थः । तेषामवान्तरभेदमाह—**तदिति** । तत्र तेषु नामाक्षरेषु मध्ये यत्सत्सकारस्तदमृतं तकारान्तनिर्देशस्तु सकारस्य सद्ब्रह्मामृतवाचकत्वेनामृतत्वसाधनार्थः । अथ यत्ति तकाराक्षरं तन्मर्त्यम् । अथ यद्यं यकाराक्षरं तेन यकाराक्षरेणोभे पूर्वे अमृतमर्त्याख्ये अक्षरे यच्छत्युपासको नियमयति वशी करोति । कुतः । यद्यस्मादनेन यकारेणोभे सकारत्तकाराख्ये अक्षरे यच्छति तस्माद्यमित्यर्थः । उपासनाफलमाह—**अहरिति** । एवं ब्रह्मनामनिर्वचनेन नामवतो वेत्तीत्येवंवित् । शेषमुक्तार्थम् ॥ ५ ॥

इत्यष्टमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

( अथाष्टमाध्यायस्य चतुर्थः खण्डः । )

---

उक्तं संप्रसादस्वरूपभूतं ब्रह्म पुनर्गुणैर्ब्रह्मचर्यसाधनसंबन्धार्थं स्तौति—

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥**

**अथेति** । अथशब्दः प्रकारान्तरेण स्तुतिप्रारम्भार्थः । य उक्तलक्षण आत्मा स सेतुरिव सेतुः । तद्वद्विधृतिर्विधरणः सर्वस्य जन्तोर्वर्णाश्रमादिभेदवतो विधारकः । किमर्थमेषां भूरादिलोकानामसंभेदाय विदारणायाविनाशायेत्यर्थः । सेतुस्वरूपमाह—**नैतमिति** । एतं

सेतुमात्मानमहोरात्रे न तरतः परिच्छेदकरणेन नातिक्रामतो न प्राप्नुतः । अत एव न जरा न मृत्युर्न शोको न सुकृतं धर्मो न दुष्कृतमधर्मस्तरतीति प्रत्येकं संबध्यते । किंबहुना सर्वेऽहोरात्राद्या उक्ता अनुक्ताश्च पाप्मानोऽतः सदाख्यादात्मनो निवर्तन्ते तमप्राप्यैवेत्यर्थः । अत्र हेतुमाह—**अपहतपाप्मा हीति** । हि यस्मादेष ब्रह्मैव लोको ब्रह्मलोकोऽपहतो गतः पाप्मा धर्माधर्मौ यस्मादित्यपहतपाप्मेत्यर्थः ॥ १ ॥

यथोक्तसेतुप्राप्तौ फलमाह—

**तस्माद्वा एतꣳ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतꣳ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥ २ ॥**

**तस्मादिति** । तस्मादान्ध्यादिशरीरवदेव तस्मात्पूर्वशरीरसंबन्धादन्धोऽपि वा एतं सेतुं तीर्त्वा प्राप्यानन्धो भवति । तथा पूर्वं विद्धो दुःखादिसंबद्धः सन्देहवियोगात्सेतुं प्राप्याविद्धो भवति । तथैव पूर्वमुपतापी रोगाद्युपतापवान्सन्ननुपतापी भवति । किंच यस्माद्ब्रह्मणोऽहोरात्रेण तत्तस्माद्वा एत सेतुं तीर्त्वा प्राप्य नक्तं तमोरूपमहरेवाऽऽत्मज्योतिरेवाभिनिष्पद्यते संपद्यते । अत्र हेतुमाह—**सकृदिति** । हि यस्मादेष ब्रह्मैव लोकः सकृत्सदा विभातः स्वेन रूपेण भासमानोऽवतिष्ठत इत्यर्थः ॥ २ ॥

एतत्फलं विद्यावत्त्वेन केषां सिध्यतीत्यपेक्षायामाह—

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोषु कामचारो भवति ॥ ३ ॥**

**इत्यष्टमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥**

---

**तद्य इति** । तत्तत्रैवं सति य एवैतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेनोपदेशादनुविन्दन्ति स्वसंवेद्यतामापादयन्ति तेषामेवैष ब्रह्मलोको नान्येषामित्यर्थः । उक्तं फलमुपसंहरति—**तेषामिति** । तेषां ब्रह्मचर्यवतां ब्रह्मविद्याविदां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् ॥ ३ ॥

इत्यष्टमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

( अथाष्टमाध्यायस्य पञ्चमः खण्डः । )

---

ब्रह्मचर्यं विदधती यज्ञादिभिस्तत्स्तौति—

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥ १ ॥**

**अथेति ।** ब्रह्मचर्यस्योक्तरीत्या विविदिषितत्वेन तदीयस्तुतिप्रारम्भार्थोऽथशब्दः । यद्यज्ञः पुरुषार्थसाधनमाचक्षते कथयन्ति तद्विदस्तद्ब्रह्मचर्यमेव । कुतो यज्ञो ब्रह्मचर्यफलेऽन्तर्भवतीत्यपेक्षायां यज्ञफलस्य ब्रह्मचर्यवतो लाभादित्याह—**ब्रह्मचर्येण हीति ।** हि यस्माद्यो ज्ञाता ब्रह्मचर्येणैवाऽऽत्मनो ज्ञानात्तमात्मभूतं ब्रह्मलोकं विन्दते लभते । तथा यदिष्टमीश्वराराधनमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः ब्रह्मचर्येणैव हि यस्मादीश्वरमिष्ट्वा पूजयित्वाऽऽत्मविषयामेषणां वा कृत्वाऽऽत्मानमनुविन्दते ॥ १ ॥

**अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुते ॥ २ ॥**

अथ यत्सत्त्रायणं बहुयजमानकं कर्माऽऽचक्षते ब्रह्मचर्यमेव तत् । कुतः । ब्रह्मचर्येण ह्येव सत ईश्वरात्सकाशादात्मनस्त्राणं विन्दते लभते । अथ यन्मौनं प्रसिद्धमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः । एष ह्यात्मा न नश्यति । ब्रह्मचर्येण ह्येवाऽऽत्मानमुपदेशादनुविद्य मनुते मननं ध्यानं करोति ॥ २ ॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ॥ ३ ॥**

अथ यदनाशकायनमुपवासपरायणत्वमित्याचक्षते ब्रह्मचर्यमेव तत् । कुतः । एष ह्यात्मा न नश्यति यमात्मानं ब्रह्मचर्येणानुविन्दते । अथ यदरण्यायनमरण्यवास इत्याचक्षते ब्रह्मचर्यमेव तत् । अत्र वक्ष्यमाणयोररण्ययोरयनादितिहेतुक्तिमभिप्रेत्य ब्रह्मचर्यसह-

कृतविद्यासाध्यं फलमाह—**अरश्चेति** । इतोऽस्माँल्लोकादारभ्य तृतीयस्यां तृतीयत्वेन व्यवस्थितायां दिवि द्युलोकाख्ये ब्रह्मलोकेऽरश्च ण्यश्च ह वै प्रसिद्धावर्णवौ समुद्रौ वर्तेते । तत्र ब्रह्मलोक ऐरमिराऽन्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरंमदीयं तदुपयोगिनां मदकरं दर्षोत्पादकं सरोऽस्ति । तत्तत्र ब्रह्मलोकेऽश्वत्थो वृक्षः सोमममृतं स्रवतीति सोमसवनो वा नामतो वा । तत्तत्रैवापरैर्ब्रह्मचर्यवद्भ्योऽन्यैर्न जीर्यत इत्यपराजिता नाम पूः पुरी हिरण्यगर्भस्य वर्तते । तत्रैव च प्रभुणा ब्रह्मणा विमितं निर्मितं हिरण्मयं सौवर्णमण्डपमिति शेषः ॥ ३ ॥

**तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥**

**इत्यष्टमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥**

---

तत्तत्रैव चैतावर्णवौ यावरश्च ण्यश्चेत्यरण्याख्यावुक्तौ तौ ये ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष व्याख्यातो ब्रह्मलोकस्तेषामेव च सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् ॥ ४ ॥

इति अष्टमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

( अथाष्टमाध्यायस्य षष्ठः खण्डः । )

---

अथ ब्रह्मचर्यादिसाधनसंपन्नस्य यथोक्तहृदयब्रह्मोपासकस्य मूर्धन्यया नाड्या गतिं वक्तुमाह—

**अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥**

**अथ या इति** । अधिकारिणः सफलोपास्तिविधानानन्तर्यमथशब्दार्थः । या एता वक्ष्यमाणा हृदयस्य हृदयपुण्डरीकाकारस्य संबन्धिन्यो नाड्यस्ताः पिङ्गलस्येति षष्ठ्यत्र तृतीयार्थे । वर्णतः पिङ्गलेनाणिम्नः सूक्ष्मान्नरसेनार्थात्पूर्णास्तिष्ठन्ति तदाकारा वर्तन्ते । तथा शुक्लस्य शुक्लेन नीलस्य नीलेन पीतस्य पीतेन लोहितस्य लोहितेनाणिम्ना रसेन पूर्णास्तिष्ठन्तीति प्रत्येकं संबन्धद्योतनार्थमितिशब्दः । नाडीगतरसानामेतादृग्वर्णवैचित्र्यं तु तादृगादित्यतेजःसंबन्धादिति वक्तुं तावदादित्यस्य तादृग्वर्णवत्त्वमाह—**असौ वा आदित्यः पिङ्गल इत्यादिना** । एतच्छास्त्रादादित्यस्यैतद्वर्णवत्त्वमभ्युपेयमित्यर्थः ॥ १ ॥

अस्य नाडीसंबन्धं दृष्टान्तेनाऽऽह—

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥**

**तद्यथेति ।** तत्त्र दृष्टान्तो यथा लोके महान्विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ गच्छति । उभौ काविमं च संनिहितममुं च विप्रकृष्टमित्युभौ । एवं यथादृष्टान्तमेवैतत्प्रसिद्धा आदित्यरश्मय इमं पुरुषममुं चाऽऽदित्यमुभावुभयत्र गच्छन्ति प्रविष्टा इत्यर्थः । एतदेव प्रकटयति—**अमुष्मादिति ।** या रश्मय अमुष्मादादित्यमण्डलात्प्रतायन्ते संतता भवन्ति ता रश्मय आसु यथोक्तास्वध्यात्मं नाडीषु सृप्ता गताः प्रविष्टाः । ये चाऽऽभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः संतानभूतास्ते रश्मयोऽमुष्मिन्नादित्ये सृप्ता गता इत्यर्थः ॥ २ ॥

उक्तरूपाणां नाडीनां विज्ञानमयस्य स्वापाधिकरणत्वेन स्तुत्यर्थं स्वापमाह—

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति ॥ ३ ॥**

**तदिति ।** तत्तत्रैवंसति यत्र यस्मिन्काल एतत्स्वप्नं यथा स्यात्तथा सुप्तः सामस्त्येनोपसंहृतसर्वकरणवृत्तितः संप्रसन्नः सम्यक्प्रसन्नोऽत एव स्वप्नं स्वप्नप्रत्ययं न विजानाति नानुभवति तदाऽसौ जीवो यथोक्तासु नाडीषु सृप्तः प्रविष्टो नाडीद्वारा पूर्वोक्तं हृदयाकाशं सदाख्यं प्राप्तो भवतीति यावत् । तं सता संपन्नं कश्चन न कश्चिदपि पाप्मा धर्माधर्मरूपः स्पृशति । कुतः । हि यस्मात्तदा सुप्तौ तेजसा नाड्यन्तर्गतेन सौरेण परमात्माख्येन वा संपन्नः सर्वतो व्याप्तो भवति ॥ ३ ॥

एवं स्तुतनाडीद्वारा गमनं वक्तुं मरणकालं प्रसञ्जयति—

**अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥**

**अथेति** । नाडीभिरूर्ध्वगमनप्रदर्शनार्थोऽथशब्दः । यत्र यस्मिन्कालेऽबलिमानमबलभावं स्वदेहजरादिनिमित्तं कृशीभावमेतन्नयनं यथा स्यात्तथा नीतः प्रापितो भवति तं मुमूर्षुमभितः सर्वतो वेष्टयित्वाऽऽसीना उपविष्टा ज्ञातय आहुः । किं जानासि मां पुत्रं जानासि म पितरमिति । स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावज्जानाति ॥ ४ ॥

**अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥**

अथ प्रारब्धक्षयानन्तरं यत्र यस्मिन्काल एतदुत्क्रमणं यथा स्यात्तथाऽस्माच्छरीरादुत्क्रामति । अथ तदैतैरेव नाडीषु प्रसृतादित्यरश्मिभिरेवोर्ध्वमाक्रमते । स यथोक्तदहरविज्ञानसंपन्न ओमित्याकारेणाऽऽत्मानं मरणकालेऽपि ध्यायन्वा हैवोदूर्ध्वं वा मीयते गच्छति । अविद्वांस्तु तिर्यग्गच्छतीत्यभिप्रायो वाशब्दादवगम्यते । स उत्क्रमिष्यन्विद्वान्यावद्यावता कालेन मनः क्षिपेन्मनसः क्षेपः स्यात्तावता कालेन क्षिप्रमेव गच्छति प्राप्नोति । किमर्थमित्यत आह—**एतदिति** । एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारमतो विदुषां प्रपदनं प्रपद्यतेऽनेन ब्रह्मलोकमादित्यलक्षणद्वारेणेति प्रपदनं ब्रह्मलोकप्राप्तिसाधनमविदुषां त्वस्मादादित्यान्निरोधो निरोधनमादित्यप्राप्तिरपि न भवतीत्यर्थः ॥ ५ ॥

उक्तनाडीविभागे मन्त्रं संवादयति—

**तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥**

**इत्यष्टमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

---

**तदिति** । तत्तत्रोक्तेऽर्थ एष श्लोको भवति । हृदयस्य नाड्यः शतं चैका चैकोत्तरं शतं प्रधानभूतास्तासां नाडीनां मध्य एका नाडी मूर्धानमभिलक्ष्य निःसृता निर्गता । तया नाड्योर्ध्वमायन्गच्छन्नमृतत्वममृततामेति प्राप्नोति । विष्वङ्नानागतयोऽन्या नाड्य उत्क्रमण उत्क्रान्त्यर्थं संसारप्राप्त्यर्थमेव भवन्ति । द्विरभ्यासो नाडीप्रकरणस्य दहरविद्याप्रकरणस्य वा समाप्त्यर्थः ॥ ६ ॥

इत्यष्टमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

( अथाष्टमाध्यायस्य सप्तमः खण्डः । )

---

अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्येत्याद्युक्तः संप्रसादः कः केन वा साधनेन तस्य परमात्माधिगमोऽधिगम्यमानश्च परात्मा किंरूपः कथं वा तस्य वागाद्यतीतस्यावगम इत्येतान्प्रश्नान्निर्णेतुं तावत्प्रजापतिवाक्यमनुवदति—

**य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥**

**य आत्मेति** । योऽपहतपाप्मादिविशेषणको हृदयस्थो ब्रह्मचर्याद्युपलब्धिसाधनक उक्तः स आत्माऽन्वेष्टव्य उपदेशतोऽन्विष्य स विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः । तत्फलमाह—**सर्वांश्च लोकानिति** । उक्तार्थम् ॥ १ ॥

विद्याया ग्रहणविधिप्रदर्शनार्था स्तुत्यर्था वाऽऽख्यायिकामारचयति—

**तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥**

**तदिति** । तदेतदुक्तं प्रजापतिवचनं ह किलोभये देवाश्चासुराश्च देवासुरा अनु परम्परया स्वकर्णगोचरापन्नं बुबुधिरे बुद्धवन्तः । ते देवासुरा अन्योन्यं परिषद्यूचुः । किम् । हन्त यद्यनुमतिर्भवेत्तर्हि प्रजापतिनोक्तं तमात्मानमन्विच्छामोऽन्वेषणं कुर्मः । यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोतीत्युक्त इन्द्रो ह देवानां राजैव विरोचनश्चासुराणां राजा पितरं प्रजापतिं प्रवव्राज प्रगतवान् । कथं तौ हेन्द्रविरोचनावसंविदानौ संवादं मैत्रीमकुर्वाणावेव समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशं समीपमाजग्मतुरागतवन्तौ ॥ २ ॥

**तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्तावत्रास्तमिति तौ**

**होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्यु-
र्विशोको विजिघत्सोऽपिपासः सत्यकामः
सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः
स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्य-
स्तमात्मानमनुविद्य विजानातीति भगवतो
वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥ ३ ॥**

तौ हेन्द्रविरोचनौ गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ । तावागताविन्द्रविरोचनौ प्रति ह प्रजापतिरुवाच । किम् । किमिच्छन्तौ किं प्रयोजनमभिप्रेत्येच्छन्ताववास्तमुषितवन्तावित्येवमुक्ताविन्द्रविरोचनावूचतुः । किम् । योऽपहतपाप्मेत्यादि भगवतो वचो वचनं वेदयन्ते शिष्टा अतस्तमेवंभूतमात्मानं ज्ञातुमिच्छन्ताववास्वेतिवक्तव्येऽवास्तमितिप्रजापतिवचनानुकर्षणमात्रम् ॥ ३ ॥

**तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो
दृश्यत एष आत्मेति होवाचैतदमृतमभयमेत-
द्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चा-
यमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु
परिख्यायत इति होवाच ॥ ४ ॥**

**इत्यष्टमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥**

---

तावेवमुक्तवन्ताविन्द्रविरोचनौ प्रति ह प्रजापतिरुवाच । किम् । य एषोऽक्षिणि पुरुषो द्रष्टा योगिभिर्दृश्यत एष आत्माऽपहतपाप्मादिगुणत्वेनोक्त एतदात्मतत्त्वममृतं भूमाख्यमत एवाभयमत एव ब्रह्मेति एवमुक्तौ । अथशब्दः प्रश्नार्थः । हे भगवो योऽयमप्सु परिख्यायते परि समन्ताज्ज्ञायते यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते खड्गादौ चैष एषां मध्ये भवतोक्त आत्मा कतमः किमन्यतरः किं वा सर्वेष्वेक एवेति पृष्टः प्रजापतिर्यश्चक्षुषि द्रष्टा दृश्यत इत्युक्त एष स्वहृदयस्थ उ एवाऽऽत्मा सर्वेषु यथोक्तेष्वबादिष्वन्तेषु मध्येषु परिख्यायते दृश्यत इति ह प्रजापतिरुवाचेत्यर्थः ॥ ४ ॥

इत्यष्टमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

( अथाष्टमाध्यायस्याष्टमः खण्डः । )

---

अथ प्रजापतिस्तयोर्विपरीतग्रहणनिवृत्त्युपायमुपदिशति—

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजा-
नीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षांच-**

क्षाते तौ ह प्रजापतिरुवाच किं पश्यथ इति
तौ होचतुः सर्वमेवेदमावां भगव आत्मानं
पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूप-
मिति ॥ १ ॥

**उदशराव इति** । उदशरावे उदकपूर्णशरावादावात्मानमवेक्ष्य यत्तत्राऽऽत्मानं पश्यन्तौ न विजानीथो युवां तन्मे मम प्रब्रूतमाचक्षीयाथाम् । इति प्रजापतिनोक्तौ ताविन्द्रविरोचनौ होदशरावेऽवेक्षांचक्राते अवेक्षणं चक्रतुः । तौ कृतावेक्षणाविन्द्रविरोचनौ ह प्रजापतिरुवाच । किं पश्यथेत्येवं प्रजापतिना पृष्टौ ताविन्द्रविरोचनौ होचतुः । किम् । हे भगव आवां यथा नखलोमादिमन्तौ स्वस्तथैवाऽऽवामा लोमभ्यो लोमान्यभिव्याप्य तथाऽऽ नखेभ्य इदं प्रतिरूपं प्रतिबिम्बभूतं स्वयमेवाऽऽत्मानं पश्यावः ॥ १ ॥

तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ
परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह
साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरा-
वेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं
पश्यथ इति ॥ २ ॥

इत्युक्तवन्तावनिवृत्तविपरीतग्रहणौ तौ ह प्रजापतिस्तन्निवृत्त्यर्थं पुनरप्युवाच । किम् । युवां साध्वलंकृतौ साधु सुष्ठ्वलंकारेणालंकृतौ सुवसनौ सुष्ठुवस्त्रपरिधानौ परिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरवेक्षेथाम् । इत्युक्तौ तथैव कृतवन्तावित्याह—**तौ ह साध्वलंकृतावित्युक्तार्थेन** । तथाकृतवन्तौ तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ
सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः सा-
ध्वलंकृतौ सुवसनौ परिष्कृतावित्येष आत्मेति
होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृ-
दयौ प्रवव्रजतुः ॥ ३ ॥

एवमुक्तौ तौ होचतुः । किम् । हे भगव आवां साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व इतीदमुदाहरणं यथैवमेवेमौ प्रतिबिम्बौ साध्वलंकृतौ सुवसनौ परिष्कृतावित्येवं विपरीतमेवोक्तवन्तौ । प्रजापतिस्तु स्वाभिप्रेतमेवाऽऽत्मानमेष आत्मेति होवाच । एतदमृतमभयमेतद्ब्रह्मेत्येवं विपरीतग्रहणनिवृत्त्यर्थमुक्तवानपि केनचिद्दोषेण प्रतिबद्धौ ताविन्द्रविरोचनौ क्रमेण च्छायातद्धेतुशरीरयोः क्रमेणाऽऽत्मत्वं गृहीत्वा शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी प्रवव्रजतुर्जग्मतुः ॥ ३ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्याऽऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽऽत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥४॥**

तौ हेन्द्रविरोचनौ दूरं गच्छन्तावन्वीक्ष्याऽऽलक्ष्यापहतपाप्मत्वादिवचनवदेतदप्यनयोः श्रवणगोचरमेष्यतीति मत्वा प्रजापतिरुवाच । किम् । अनुपलभ्य यथोक्तमात्मानं शास्त्राचार्याभ्यामज्ञात्वाऽननुविद्य स्वप्रत्यक्षतां चाकृत्वा विपरीतनिश्चयौ भूत्वैताविन्द्रविरोचनौ व्रजतो गच्छेयाताम् । अतो यतरे ये केचन देवा असुरा वा एतदुपनिषद आभ्यां या गृहीताऽऽत्मविद्या छायातदाश्रयदेहविषया सेयमुपनिषद्येषां देवानामसुराणां वा त एतदुपनिषद एवंविज्ञाना एतन्निश्चया भविष्यन्ति ते पराभूता भविष्यन्तीत्युक्तं प्रजापतिवाक्यं श्रुत्वा स्वगृहं गच्छन्योऽसुरराजः स शान्तहृदय एव सन्विरोचनोऽसुराञ्जगाम । गत्वा च तेभ्योऽसुरेभ्य एतां शरीरात्मबुद्धिरूपामुपनिषदं प्रोवाच । देहमात्र एवाऽऽत्मा पित्रोक्त इत्युवाचोक्तवानतो भवद्भिरपि प्रजापतिनोक्त आत्मैव देह एवेह लोके महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयः सेवनीय एवमात्मानं देहमेवेह लोके महयन्नात्मानमेव परिचरंश्चोभौ लोकाववाप्नोति । कौ । इमं च लोकममुं च परलोकमित्युभावित्यर्थः ॥ ४ ॥

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाᳩ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति सᳪस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥**

**इत्यष्टमाध्यायस्याष्टमः खण्डः ॥ ८ ॥**

---

यस्मादेवमसुरसंप्रदायोऽद्याप्यनुवर्तते । तस्माद्देहात्मवादस्याप्यासुरत्वादद्यापि लोकेऽददानं यथा विभागमन्नादेरदानशीलमश्रद्दधानं सत्कार्येषु श्रद्धारहितमयजमानमयजनस्वभावमासुरः खल्वयं बतेति खिद्यमानाः शिष्टा आहुः । कुतो हि यस्मादसुराणामेषा श्रद्धानतादिलक्षणोपनिषद्विज्ञानमित्यर्थः । प्रकृतोपनिषत्कार्यमाह—**प्रेतस्येति** । एतदुपनिषदा संस्कृताः प्रेतस्य मृतस्य शरीरं कुणपं भिक्षया गन्धमाल्यादिलक्षणया वसनेन

वस्त्राच्छादनेनालंकारेण ध्वजादिना संस्कुर्वन्त्यनेन कुणपसंस्कारेणामुं परलोकं जेष्यन्तो वयमिति मन्यन्त इत्यर्थः ॥ ९ ॥

इत्यष्टमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

( अथाष्टमाध्यायस्य नवमः खण्डः । )

---

एवं स ह शान्तहृदय इत्यनेन विरोचनगतं विशेषं दर्शयित्वेन्द्रगतं तमाह—

**अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति ॥ १ ॥**

**अथ हेन्द्र इति ।** अथशब्द इन्द्रगतविशेषकथनार्थः । इन्द्रो ह दैव्या संपदा युक्तत्वात्प्रजापतिवचनं पुनः पुनः स्मरन्नेव गच्छन्देवानप्राप्यैवैतद्वक्ष्यमाणं छायात्मनि स्वात्मग्रहणनिमित्तं भयं दोषं ददर्श । तदेव प्रकटयति—**यथैवेति ।** यथैव खल्वस्मिञ्छरीरे साध्वलंकारेणालंकृतेऽयं छायात्माऽपि साध्वलंकृतो भवति । सुवसने सुवसनयुक्ते सुवसनः परिष्कृते नखलोमादिच्छिन्ने च परिष्कृतो नखलोमादिरहितो भवत्येवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदस्मिञ्छरीरेऽन्धे सति च्छायात्माऽप्यन्धो भवति । तथा स्राम एकनेत्रे देहे सति छायात्मा स्रामः परिवृक्णे छिन्ने हस्ताद्यवयवे देहे छायात्माऽपि परिवृक्णः । किंचास्यैव देहस्य नाशमन्वेष छायात्मा नश्यति ॥ १ ॥

**नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

अतो नाहमत्रास्मिंश्छायात्मदर्शने भोग्यं फलं पश्यामीत्येवं छायादर्शने दोषमध्यवस्य स इन्द्रः समित्पाणिः समिद्भारहस्तो ब्रह्मचर्यं वस्तुं पुनरेयायाऽऽगतवान् । तमागतमिन्द्रं प्रजापतिरुवाच । किम् । हे मघवन्यद्यदि त्वं शान्तहृदयो विरोचनेन सार्धं प्राव्राजीः प्रगतवानसि तर्हि किं किमिच्छन्पुनरागमस्तवाऽऽगमनमित्युक्तः स इन्द्रो होवाचेत्यादि पश्यामीत्यन्तमुक्तार्थम् ॥ २ ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥**

**इत्यष्टमाध्यायस्य नवमः खण्डः ॥ ९ ॥**

---

एवमेवैष यथा त्वयैष छायात्मा विनाशित्वादिधर्मकत्वेनोक्तस्तथैव हे मघवन्निति होवाच । [१]तं त्वेव यत्पूर्वं मयाऽक्ष्यादौ द्रष्टृत्वेनोक्तस्तमेवाऽऽत्मानं भूयः पुनरप्यनुव्याख्यास्यामीत्यतस्त्वं वसापराणि द्वात्रिंशद्वर्षाणि ब्रह्मचर्यं दोषक्षपणायेत्युक्तः स इन्द्रोऽपराणि द्वात्रिंशतं वर्षाण्युवास । तस्मा एवमुषितवतेऽप्रज्ञातमात्मानमुवाचेत्यर्थः ॥ ३ ॥

इत्यष्टमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

( अथाष्टमाध्यायस्य दशमः खण्डः । )

---

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥**

कथं य उक्तलक्षण एष स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरति स्वाप्नभोगाननुभवत्येष आत्मेत्युक्तार्थम् । एवमुक्तः स हेन्द्रः शान्तहृदयः प्रवव्राजेत्युक्तार्थम् । कथं दोषदर्शनं वृत्तमित्यत आह—**तद्यद्यपीति** । तद्यद्यपीदं शरीरमन्धं भवति तथाऽप्ययं स्वप्नात्माऽप्यनन्धो भवति । तथा यदीदं शरीरं स्राममेकनेत्रविकलं भवति तथाऽपि सोऽस्रामश्च भवति । न वै नैवैष स्वप्नात्माऽप्यस्य देहस्य दोषेण दुष्यति ॥ १ ॥

---

१ क. °थं नयनद° ।

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति॥२॥ स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥ न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥

इत्यष्टमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

नास्य शरीरस्य वधेन स हन्यते नास्य शरीरस्य स्राम्येण चक्षुरादिगतस्रवत्वेनायं छायात्मस्स्रामो भवति तथाऽपि त्वेनं स्वप्नदृशं केचन घ्नन्त्येव । एवकार इवार्थे । तथा विच्छादयन्तीव हस्तादयो विद्रावयन्तीव तथाऽप्रियं पुत्रादिमरणनिमित्तं वेत्तेव ज्ञातेव भवत्यपि च रोदितीव । अतो नाहमत्र स्वप्नात्मज्ञानेऽपि भोग्यं पश्यामीत्येवं विचार्य स इन्द्रः समित्पाणिरित्याद्युक्तार्थम् ॥ २ ॥ ३ ॥ ४ ॥

इत्यष्टमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

( अथाष्टमाध्यायस्यैकादशः खण्डः । )

---

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि

**भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

योऽक्षिणि द्रष्टा स्वप्ने च महीयमानश्चरति तद्यत्रैतत्सुप्त इत्याद्युक्तार्थम् ॥ १ ॥

**स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥**

एवं प्रजापतिनाऽऽगमनप्रयोजनं पृष्टः सुप्तेऽपि दोषं दृष्टवानित्याह—**स होवाच नाहेति** । स इन्द्रो होवाच । किम् । नाह नैव खल्वयं सुषुप्तस्थोऽप्यात्मैव जाग्रदवस्थात्मवत्संप्रतीदानीं चाऽऽत्मानं जानाति नैवं जानाति । कथम् । अयमहमस्मीत्यात्मानं जानाति नो एवेमानि नैवेमानि प्रसिद्धानि भूतानि च जानात्यतोऽयं सुषुप्त आत्माविनाशमेवापीतो गतो भवति विनष्ट इव भवत्यतो नाहमत्र सुषुप्तेऽपि भोग्यं पश्यामीत्यादि समानम् ॥ २ ॥

ब्रह्मचर्यवर्षाण्येकीकृत्याऽऽह—

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ संपेदुरेतत्तद्यदाहुरेकशतꣳ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥**

**इत्यष्टमाध्यायस्यैकादशः खण्डः ॥ ११ ॥**

---

**तानीति** । तानीन्द्रब्रह्मचर्यवर्षाण्येकशतमेकाधिकं शतं संपेदुः संपन्नानि । अस्याः संख्यायाः श्रुतिः स्वमुखेनैतिह्यत्वं विद्यास्तुत्यर्थमाह—**एतदिति** । यदेवं वृत्तं तदेतदाहुः शिष्टाः । किम् । एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास । तस्मै मृदितकषायायेन्द्राय स्थानत्रयदोषसंबन्धरहितमात्मस्वरूपमपहतपाप्मादिलक्षणमुवाच । अतो महदेतज्ज्ञानमित्यर्थः ॥ ३ ॥

इत्यष्टमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

१ ख. °तिस एष सुप्त इत्यादि देवानित्यन्तमुक्तार्थम् । एतद्धयं ददर्श । स इ° ।

( अथाष्टमाध्यायस्य द्वादशः खण्डः । )

---

कार्यकारणशरीरपरिवेष्टितौ विश्वतेजसावुक्तौ कारणमात्रप्रतिबद्धश्च प्राज्ञो व्याख्यातः संप्रत्यशरीरं तुरीयमुपदेष्टुं सशरीर एव विशेषज्ञानवान्भवत्यशरीरस्य तु तदभावात्तव विनाशभ्रमो न विनश्यतीत्यभिप्रेत्य शरीरं निन्दति—

**मघवन्मर्त्यं वा इदꣳ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

**मघवन्निति** । हे मघवन्निदं दृश्यमानं वै प्रसिद्धं शरीरं मर्त्यं विनाशि सन्मृत्युनाऽऽत्तं व्याप्तं ग्रस्तमित्युक्ते त्रासेन वैराग्यं भवतीत्येतदर्थं पुनरुक्तम् । तच्छरीरमस्य संप्रसादस्यामृतस्य मरणादिदेहेन्द्रियादिधर्मवर्जितस्याशरीरस्य तत्तु वाय्वादिवदमूर्तत्वादियुक्तस्याऽऽत्मनोऽधिष्ठानं भोगस्येति शेषः । यद्वा जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिञ्छरीर इत्यधिष्ठानमेवंभूतं शरीरं विद्यते यस्य स्वभावतोऽशरीरस्यापि सोऽशरीरः सन्प्रियाप्रियाभ्यां सुखदुःखाभ्यामात्तो व्याप्तो वै प्रसिद्धम् । तामेवोपपादयति—**न वा इति** । नैव सशरीरस्य सतोऽविवेकात्प्रियाप्रिययोः संततिरूपयोरपहतिर्विनाश उच्छेदोऽस्ति । एवमज्ञस्य देहसंबन्धद्वारा संसारित्वमुक्त्वा तस्यैव विद्यावतो देहसंबन्धनिवृत्तिद्वारेण मुक्तिं दर्शयति—**अशरीरमिति** । अशरीरं निवर्तितसशरीरभ्रमं वाव एव सन्तं नैव प्रियाप्रिये स्पृशतः ॥ १ ॥

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते॥२॥**

न विद्यते पाण्यादिमच्छरीरं यस्येत्यशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरित्येतान्यशरीराणि तत्तत्रैवं वाय्वादीनामशरीरत्वे सति यथैतानि वाय्वादिभूतानि पूर्वमाकाशैकतां गतानि सन्ति पश्चादमुष्माद्भौतिकादाकाशात्समुत्थाय परं प्रकृष्टं ग्रैष्मं सावित्रं ज्योतिरुपसंपद्य प्राप्य स्तिमितभावं हित्वा स्वेन स्वेन रूपेण पुरोवातपर्वतज्योतिर्लतागर्जितादिलक्षणेन वाय्वादयः क्रमेणाभिनिष्पद्यन्तेऽभिनिष्पत्तिमापद्यन्ते ॥ २ ॥

---

१ ख °नाऽऽत्तं प्राप्तं ग्र° ।

एवमेवैष संप्रसादोऽस्माच्छरीरात्समुथाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदꣳ शरीरꣳ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥

एवं यथादृष्टान्तमेवैष संप्रसादो जीवोऽविद्यावस्थायां शरीरसाम्यमापन्नः केनचिदाचार्येण नासि त्वं देहादिधर्मा किंतु तत्त्वमसीत्येवं प्रतिबोधितः समस्ताच्छरीरात्समुत्थाय देहात्मभावनां हित्वा परं परमात्मलक्षणं ज्योतिरुपसंपद्य स्वेनाऽऽत्मीयेन रूपेणाभिनिष्पद्यत इत्युक्तार्थम् । अभिनिष्पद्यमानस्य स्वरूपमाह—**स उत्तमः पुरुष इति** । स एवमभिनिष्पन्नः संप्रसाद उत्तमश्चासौ पुरुषश्चोत्तमपुरुषो जाग्रत्स्वप्नसुप्ताद्यपेक्षयेत्यर्थः । आत्मज्ञानस्तुतये विदुषः समाचारमाह—**स तत्रेति** । स संप्रसादः सर्वात्मभूतस्तत्र स्वात्मनि पर्येति पर्यटति । किं कुर्वन् । किंचिदिन्द्राद्यात्मना जक्षन्विषयान्भक्षयन्हसन्वा क्वचिद्ब्रह्मलोके मानसैः पित्रादिभिः क्रीडंस्तथा मानसैरेव स्त्र्यादिभिर्वा यानैर्वा रथादिभिर्ज्ञातिभिर्वा रममाणश्च मनसैव नोपजनं स्त्रीपुंसयोरन्योन्यसमागमाज्जातमुपजनमिदं स्थूलं शरीरं न स्मरन्नस्मरंस्तस्य दुःखहेतुत्वादितीत्यर्थः । अथास्य लिङ्गोपाधिकं स्वरूपं सदृष्टान्तमाह—**स यथेति** । स प्रयोग्यः प्रयोज्यत इति प्रयोग्योऽश्वादिर्यथा लोक आचरति गच्छत्यनेनेत्याचरणो रथादिस्तस्मिन्नियुक्त एवं यथादृष्टान्तमेवास्मिन्स्थूलशरीरेऽयं प्राणो लिङ्गाख्यस्तदुपाधिकः प्राज्ञो रथित्वेन युक्त ईश्वरेण नियुक्तः ॥ ३ ॥

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदꣳ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

अथानन्तरं यत्र संसारदशायां यदैतत्प्रसिद्धं चक्षुराकाशं कृष्णतारोपलक्षितं देहच्छिद्रमनुविषण्णमनुपक्तमनुगतं तदा शारीरश्चक्षुषि भवश्चाक्षुषः पुरुषः पूर्वं प्रजापत्युपदिष्टो दर्शनाय रूपाद्युपलब्धिनिमित्तं चक्षुश्चष्ट इति व्युत्पत्तेः । अथ यो वेदेदं वस्तु जिघ्राण्यस्य गन्धं विजानीयामिति यो वेद स आत्मा गन्धाय गन्धविज्ञानाय घ्राणं जिघ्रतीति व्युत्पत्तेः ।

अथेदं वस्त्वभिव्याहराणि वदिष्यामीति यो वेद स आत्माऽभिव्याहारायाभिव्याहरणाक्रियासिद्धये वागिन्द्रियं भवति वक्तीति व्युत्पत्तेः । अथ यो वेदेदं वाक्यं शृणवानीति स आत्मा श्रवणाय श्रोत्रं शृणोतीति व्युत्पत्तेः ॥ ४ ॥

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥**

अथ यो वेदेदं मन्वानीति केवलमनसैव मन्वानि जानामीति यो वेद स आत्मा मनो मनुत इति व्युत्पत्तेः[१] । तच्च मनोऽस्याऽऽत्मनो दैवमप्राकृतं चक्षुर्व्यवहितादिज्ञानहेतुत्वात् । स वा एष स्वरूपमापन्नो मुक्त एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते[२] क्रीडते । कान्कामानिति । य एते ब्रह्मलोके, ब्रह्मैव लोको ब्रह्मलोकस्तस्मिन्य एते संकल्पमात्रेण लभ्या इत्युक्तास्तानित्यर्थः ॥ ५ ॥

न केवलमेवमिन्द्र एव प्रजापत्युपदेशात्कृतार्थोऽभूत्किंत्वन्येऽपि देवा इन्द्राच्छ्रुत्वाऽऽत्मानमुपास्य तथा बभूवुरित्याह—

**तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥**

**इत्यष्टमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥**

---

**तं वा एतमिति ।** तं वै इन्द्राय प्रजापतिनोक्तमेतमिन्द्रोक्तमात्मानं देवा अद्यत्वेऽप्युपासते । तस्मादुपासना च तेषां देवानां सर्वे लोका आप्ताः प्राप्ताः सर्वे च कामा आप्ता इत्यर्थः । ननु युक्तमेतत्फलं देवानां महाभाग्यत्वान्न चाऽऽधुनिकानां कलिकालवर्तिनां मनुष्याणामित्यत आह—**स सर्वानिति ।** यः कश्चित्पुमानिन्द्रादिवत्तमुक्तरूपमात्मानमाचार्यादिभ्योऽनुविद्य जानाति स्वयंवेद्यतामापादयति, स इदानींतनोऽपि

---

१ क. °त्तेः । सम° । २ क. °ते य एतान्कामान्य एते ब्र° ।

सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोतीति ह प्रजापतिरुवाच । द्विरभ्यासो ब्रह्मात्मैकत्वज्ञानप्रकरणसमाप्त्यर्थः ॥ ६ ॥

इत्यष्टमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

( अथाष्टमाध्यायस्य त्रयोदशः खण्डः । )

---

उक्तदहरविद्यायाः शेषभूतजपादिविधानार्थं मन्त्रानाह—

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥ १ ॥**

**इत्यष्टमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥**

---

**श्यामादित्यादिना ।** श्यामवदत्यन्तं दुःखग्राह्यत्वाच्छ्यामं हार्दं ब्रह्म ध्यानेन ज्ञात्वा तस्माच्छ्यामाद्धार्दाद्ब्रह्मणः सकाशाच्छबल इव शबल उक्तारण्याद्यनेकमिश्रितत्वाद्ब्रह्मलोकः शबलस्तं प्रपद्ये गच्छेयम् । कुत इत्यपेक्षायामाह—**शबलादिति ।** यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणतया श्यामं हार्दभावं प्रपद्ये प्रपन्नोऽस्मि तस्मात्तमेव प्रकृतरूपं शबलं प्रपद्य इत्यर्थः । तत्प्राप्तिमनेकदृष्टान्तेनाऽऽह—**अश्व इवेति ।** यथाऽश्वो रोमाणि लोमानि विधूय कम्पनेन श्रमं पांस्वादि च रोमतोऽपनीय निर्मलो भवत्येवं हार्दब्रह्मज्ञानेन पापं धर्माधर्माख्यं विधूयापनीय चन्द्र इव यथा राहुग्रस्तश्चन्द्रो राहोर्मुखात्प्रमुच्य भास्वरो भवत्येवं शरीरं धूत्वा प्रहायेहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसंभवामीति । इतिशब्दो ध्यातुर्ध्यानसमाप्त्यर्थः । द्विर्वचनं मन्त्रसमाप्त्यर्थम् ॥ १ ॥

इत्यष्टमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

( अथाष्टमाध्यायस्य चतुर्दशः खण्डः । )

---

दहरोऽस्मिन्नन्तराकाश इत्युक्ताकाशशब्दस्य ब्रह्मविषयत्वमुपपादयति—

**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां**

**यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमदत्कꣳ श्येतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥ १ ॥**

**इत्यष्टमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥**

---

**आकाश इति ।** आकाश इवाऽऽकाशोऽव्याकृताख्यो वा एव नाम प्रसिद्धो नामरूपयोर्जगद्बीजयोर्निर्वहिता निर्वोढा व्याकर्ता । ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते तद्ब्रह्म तच्च ब्रह्मामृतं स एव च सर्वभूतानामात्मेत्यपरोक्षमेवेत्यर्थः । एवं दर्शितोपास्यस्वरूपोपासकस्य प्रार्थनामन्त्रमाह—**प्रजापतेरिति ।** प्रजापतेश्चतुर्मुखस्य सभां परिषदं वेश्म च प्रपद्ये गच्छेयम् । यश आत्मा वाऽहं भवामि । तदेव विशिनष्टि—**ब्राह्मणानामित्यादिना ।** ब्राह्मणादीनां यशो देहेन्द्रियादिलक्षणमनुप्रापत्सि प्राप्स्यामि प्राप्तुमिच्छामि तेषां देहेन्द्रियादीनामात्मा भवामीति यावत् । उक्तमेव स्वयं परामृशति—**स हाहं यशसां यश इति ।** सोऽहं यशसां देहेन्द्रियादिलक्षणानां यश आत्मा । उक्तप्रार्थनाप्रयोजनमाह—**श्वेतमिति ।** श्वेतं रोहितं स्त्रीचिह्नं योनिशब्दितम् । किंलक्षणमदत्कं दन्तरहितमप्यदत्कं भक्षयित्वा तत्सेविनामेवंभूतं श्वेतं लिन्दु पिच्छिलमशुद्धं तदेवंलक्षणं स्त्रीचिह्नमहं माऽभिगां माऽभिगच्छेयम् । तदभिगमनस्य गर्भवासलक्षणस्यात्यन्तानर्थहेतुत्वं ज्ञापयितुं पुनर्वचनमित्यर्थः ॥ १४ ॥

इति अष्टमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

( अथाष्टमाध्यायस्य पञ्चदशः खण्डः । )

---

उक्तविद्यायाः पुरुषोत्प्रेक्षारूपाशङ्काव्युदासार्थमनादिपरम्परागतत्वमाह—

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिꣳसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स**

---

१ क. °त्मानमुक्त° ।

खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥

इत्यष्टमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

इति च्छान्दोग्योपनिषद्यष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

ॐ । आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।

ॐ शान्तिः शान्तिः शान्तिः ।

**तद्धैतदिति** । तदेनत्ससाधनमात्मज्ञानं ह किल तद्वाचकं संदर्भं ब्रह्मा हिरण्यगर्भः प्रजापतये विराडात्मन उवाच । प्रजापतिर्मनवे स्वपुत्राय । मनुः प्रजाभ्य उवाचेत्यर्थः । एवं समापितेब्रह्मविद्यासाफल्यवत्कर्मणोऽपि तद्विद्वत्संतोषार्थमाह—**आचार्यकुलादिति** । गुरोर्यत्कर्म कर्तव्यं तत्कृत्वा तदतिशेषेण कालेन यथाविधानं स्मृत्युक्तप्राङ्मुखत्वाद्यध्ययनविधानमनतिक्रम्याऽऽचार्यकुलात्सार्थं वेदमधीत्याभिसमावृत्य धर्मजिज्ञासां परिसमाप्य गुरुकुलान्निवृत्य दारानाहृत्य कुटुम्बे गार्हस्थ्ये कर्मणि स्थित्वा शुचौ देशे समासीनः स्वाध्यायं वेदमधीयानः पठमानो धार्मिकान्धर्मयुक्तान्पुत्रान्शिष्यांश्च विदधद्धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्योपसंहृत्य तीर्थेभ्यः शास्त्रानुज्ञातविषयेभ्योऽन्यत्र सर्वाणि स्थावरजङ्गमानि भूतान्यहिंसन्नपीडयन्वर्तते स खल्वधिकृतः कुटुम्ब एव यथोक्तेन प्रकारेण यावदायुषं यावज्जीवं वर्तयन्देहान्ते ब्रह्मलोकं हिरण्यगर्भाख्यमभिसंपद्यते प्राप्नोति न च पुनस्ततो ब्रह्मलोकान्महाप्रलयात्पूर्वकाल आवर्तते । महाप्रलयानन्तरं च पुनरावर्तत एव । कार्यब्रह्मप्राप्तत्वात् । द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः ॥ १ ॥

इत्यष्टमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

१ क. °मापित° । २ क. °तद्विद्या° ।

यन्मह्यादिकमाश्रितं बहुगुणं खं ब्रह्मचर्यादिभि-
र्युक्तो हृद्यवरुध्य मूर्धगतया नाड्याऽथ सौत्रं पदम् ॥
कामं क्रीडति यत्तुरीयममलं सैकं शताब्दं गुरौ
स्थित्वा देवपतिर्बुबोध तदहं ध्याये नृसिंहाभिधम् ॥
कार्यब्रह्मपदान्ततुङ्गफलवद्ध्यानप्रभेदाचलं
विश्वोद्भूतिविभूतिवादविलसद्वीचीतरङ्गाकुलम् ॥
दैन्यं मुञ्चत भो जना गुरुतरिं त्वारोहतालं श्रमै-
र्गाहन्तामनवद्यहृद्यमणये छान्दोग्यरत्नाकरम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपुरुषोत्तमाश्रमपूज्य-
पादशिष्यनित्यानन्दाश्रमविरचितायां छान्दोग्यव्या-
ख्यायां मिताक्षरायामष्टमोऽध्यायः समाप्तः ।

**नित्यानन्दकृतमिताक्षराव्याख्यासमेता**

## छान्दोग्योपनिषत्समाप्ता ।

---

